श्रीः ।

# श्रीमन्मार्कंडेयपुराणान्तर्गता

# दुर्गासप्तशती ।



ललित्य श्रीधरी टीकानुसारेण

महमदपुर माजरा

निवासि-पण्डिवर-नन्दलालशास्त्रिणा

भाषाटीकासमलंकृताच-

तस्येदं पुस्तकं

पं. श्रीधरशिवलालात्मजपं. किशनलालजीने

अपने 'ज्ञानसागर' छापखाना स्थान. माटुंगा मलमले.

आटंकरोड घर नं. ३६८ में पं. जनकप्रसाद

वाजपेयीके प्रबंधसे छापकर

प्रकाशित किया.

बम्बई,

सन १९२६.

द्वितीयावृत्तिः कापी २०००

# सप्तशतीप्रयोगः ।

श्रीगणेशायनमः ॥ अथ कवचस्थदेवताकाम्यप्रयोगाः शतचंडीविधिः मंत्रविभागकारिकाश्च संगृह्यंते ॥ ॥ तत्रांगषट्के श्लोकानां न्यूनाधिकभावो बहुषु पुस्तकेषूपलभ्यते तन्निराकरणार्थं वचनानि लिख्यंते ॥ तत्र कवचांशे श्लोका उक्ता दुर्गाप्रदीपे कवचटीकायाम् ॥ आधिक्यन्यूनतादोषपरिहारचिकीर्षया ॥ देवीनाम्नां क्रमस्यापि कथनं क्रियते मया ॥ ते च श्लोकाः प्राचीनग्रंथस्थाः सांप्रदायिका एव लिख्यंते ॥ दश दिक्पालदेव्यश्च चामुंडा च ततः परम् ॥ जया च विजया चैवाप्यजिता चापराजिता ॥ १ ॥ उद्योतिनी ततश्चोमा मालाधरी यशस्विनी ॥ त्रिनेत्रा यमघंटा च शांखिनी द्वारवासिनी ॥ २ ॥ कालिका शांकरी पश्चात्सुगंधा चर्चिका तथा ॥ अमृतादिकला पश्चात्ततः स्यात्तु सरस्वती ॥ ३ ॥ कौमारी चंडिका चित्रघंटा महा महादिका ॥ कामाख्यनंतरं सर्वमंगला भद्रकालिका ॥ ४ ॥ धनुर्धरी नीलग्रीवा ततः स्यान्नलकूवरी ॥ खड्गधारिणिका पूर्वं वज्रधारिण्यनंतरम् ॥ ५ ॥ दंडिनी चांबिका शूलेशानी यातु नलेश्वरी ॥ मनःशोकविनाशा स्याल्ललिता शूलधारिणी ॥ ६ ॥ कामिनी गुह्यपूर्वा स्यादीश्वरी च ततः परा ॥ भूतनाथा ततः स्यात्तु महामहिषवाहिनी ॥ ७ ॥ भगवत्यपि विंध्यस्था महापूर्वा बला तथा ॥ विनायकी नारसिंही ततः पश्चान्मितौजसी ॥ ८ ॥ श्रीधरांते च पातालवासिन्यंते करालिनी ॥ ऊर्ध्वकेशी च कौबेरी वागीशी पार्वती तथा ॥ ९ ॥ कालरात्रिश्च मुकुटेशानी पद्मवती तथा ॥ चूडामणिस्तथा ज्वालामुख्यभेद्या ततः स्मृता ॥ १० ॥ ब्रह्माणी छत्रपूर्वा स्यादीश्वरी धर्मचारिणी ॥ चक्रिणींद्रवधूश्चंडी महालक्ष्मी भैरवी ॥ ११ ॥ क्षेमं पूर्वाकरी पश्चाद्विजया च जयंतिका ॥ इत्येताः सम्यगाख्याताः कवचस्थाश्च शक्तय इति ॥ १२ ॥ कवचश्लोकसंख्या यथा ॥ कवचेस्मिन्सार्धपंचाशत्संख्या श्लोकसंग्रहः ॥ इति वाराहीतंत्रे ॥ अर्गलाश्लोकसंख्योक्ता तत्रैव ॥ त्रयोविंशतिसंख्यानां श्लोकानामत्र संग्रह इति ॥ श्लोकाश्चतुर्दशैवात्र कीलके संप्रतिष्ठिता इत्यपि तत्रैव ॥ प्राधानिकरहस्यसंख्या यथा ॥ सार्धत्रिंशत्समाख्याताः श्लोकास्त्वत्र सुसंस्कृता इति ॥ वैकृतिकरहस्यश्लोकसंख्या यथा ॥ श्लोकानां चैकोनचत्वारिंशत्संख्याः प्रकीर्तिता इति ॥ मूर्तिरहस्यसंख्या यथा ॥ पंचविंशतिसंख्यास्तु श्लोका अत्र प्रकीर्तिता इति ॥ एवमुक्तप्रकारेण या संख्या उक्तास्ता दुर्गाप्रदीपे द्रष्टव्याः ॥ एतदतिरिक्ताः श्लोकाः प्रक्षिप्ता एवेति बोध्यम् ॥ अत्र केचित् ॥ सप्तशतीपाठारंभे शापोद्धारादिकं कर्तव्यं तत्प्रकारो यथा तंत्रेषूक्तः ॥ त्रयोदशप्रथमौ

द्वादशद्वितीयौ एकादशतृतीयौ दशमचतुर्थौ नवमपंचमावष्टमषष्ठावध्यायौ पठित्वा सप्तममध्यायं द्विः पठेदिति शापोद्धारप्रकारः ॥ उत्कीलनं यथा ॥ आदौ मध्यमचरित्रं पठित्वा ततः प्रथमचरित्रं ततस्तृतीयचरित्रं पठेदिति ॥ तदुक्तम् ॥ अंत्याद्यार्कद्विरुद्रत्रिदिगब्ध्यंकेष्विभर्त्तवः ॥ अश्वाश्च इति सर्गाणां शापोद्धारो मनोः क्रम इति ॥ उत्कीलने चरित्राणां मध्याद्यंत्यमिति क्रम इत्याहुः ॥ अंको नवमः ॥ इषुः पंचमः ॥ इभोष्टमः अयं शापोद्धारक्रम उत्कीलनक्रमश्च यद्यप्युपलभ्यते तथापि विप्रतिपद्यंते बहवः ॥ अत्रमूलं चिंत्यमिति तु नागोजीभट्टाः ॥ वस्तुतस्तु एकेन वा मध्यमेन नैकेनतरयोरिहेति रहस्याध्यायवचनेनं यस्यैकपाठावसरो नास्ति तस्य मध्यमचरित्रपाठाभ्यनुज्ञानात्तादृशस्य पुरुषस्य पूर्वोक्तशापोद्धारोत्कीलनानुष्ठानस्यासंभवात्तदभ्यनुज्ञानं व्यर्थमेव स्यात्तस्माच्छापोद्धारादिकं नावश्यकमिति प्रतिभातीति गुरुचरणाः ॥ यद्यप्येवं तथापि कीलकस्तोत्रोक्तकृष्णायामिति श्लोकोक्तरीत्या प्रतिमासं दानप्रतिग्रहाख्यकीलनं त्ववश्यं कर्तव्यमेव ॥ तदुक्तम् ॥ कृष्णायां वा चतुर्दश्यामष्टम्यां वा समाहितः ॥ ददाति प्रतिगृह्णाति नान्यथैषा प्रसीदतीति ॥ अस्यार्थः ॥ कृष्णचतुर्दश्यां कृष्णाष्टम्यां वा समाहित एकाग्रः सन्नुपासको निजं सर्वं धनं न्यायेनार्जितं देव्यै ददाति समर्पयति हे देवि इत आरभ्येदं सर्वं धनं मदीयं तुभ्यं मया दत्तमस्ति इति ॥ समर्पयति पश्चात्संसारयात्रानिर्वाहार्थं गृहाणेदं द्रव्यं मत्प्रसादभूतमिति देव्या अनुज्ञां मनसा गृहीत्वा तद्द्रव्यं प्रसादबुद्ध्या प्रतिगृह्णाति गृहीत्वा च तन्मध्ये पंचमं भागं गुरवे निवेद्य तत्पुत्रादिभ्यो वा दत्वावशिष्टं चतुर्थांशं स्वेन क्रियमाणपंचमहायज्ञादिधर्मव्ययार्थं निष्कामस्यावशिष्टं त्रिभागात्मकं स्वार्थं नियोजयेत् ॥ एवं निरंतरं प्रतिमासं कुर्वन्देव्यधीनो भवति तस्यैषा सप्तशती प्रसन्ना भवति नान्यथेति भावः ॥ अयं च कीलकस्यार्थो रहस्यागमे परमगुरुकीलकपटले प्रदर्शितः स च गुप्तवत्यां दुर्गाप्रदीपे चोक्तस्तत एवावगंतव्य इति दिक् ॥ अथ वक्ष्यमाणकाम्यप्रयोगोपयोगिसंपुटव्यवस्था यथा ॥ तत्र पार्वतीप्रश्नः । देव्युवाच ॥ संपुटं कतिधा स्वामिन्वेत्तुमिच्छामि तत्त्वतः ॥ कथयस्व सुरेशान यद्यहं तव वल्लभा ॥ ईश्वर उवाच ॥ संपुटं द्विविधं ज्ञेयमुदयास्तकरं प्रिये ॥ शृणूदयत्वमंत्रादौ पश्चादस्तं वदामि ते ॥ मंत्रमादौ पुनः श्लोकमंते मंत्रं पुनः पठेत् ॥ पुनर्मंत्रं पुनः श्लोकं क्रमोयमुदये शुभः ॥ उदयोत्कर्षलाभायं संपुटोयमुदाहृतः ॥ अत्र सर्वत्र श्लोकमिति मंत्रोपलक्षणम् ॥ अस्तं चिकित्साशास्त्रेषु शरावाभ्यां कृतं भवेत् ॥ तच्चेहं प्रवदाम्यत्र एकाग्रकृतमानसः ॥ मंत्रमादौ पुनः श्लोकमंते मंत्रविवर्जितम् ॥ पुनर्मंत्रं पुनः श्लोकं पुनर्मंत्रविपर्ययम् ॥ मारणोच्चाटने बंधे संपुटोयमुदाहृतः ॥ प्रकारोयमनादृत्य कुर्वंत्या-

त्मप्रकल्पितम् । रौरवादिषु पच्यंते यावदाभूतसंप्लवमिति । अथ प्रयोगांतराणि कात्यायनीतंत्रोक्तानि । अस्य पुरश्चरणस्वरूपं मरीचिकल्पे । कृष्णाष्टमीं समारभ्य यावत्कृष्णचतुर्दशी । वृद्ध्यैकोत्तरया जाप्यं पूर्वसंपुटितं तु तत् । एवं देवि मया प्रोक्तः पौरश्चरणिकः क्रमः । तदंते हवनं कुर्यात्प्रतिश्लोकेन पायसा । रात्रिसूक्तं प्रतिऋचं तथा देव्याश्च सूक्तकम् । हुत्वांते प्रजपेत्स्तोत्रमादौ पूजादिकं सुने इति । पूर्वाभ्यां रात्रिसूक्तदेवीसूक्ताभ्यां संपुटितमित्यर्थः । मंत्रविभागश्च कात्यायनीतंत्रोक्तः ततो रात्रिसूक्तं देवीसूक्तं प्रतिऋचं हुत्वांते एवं पुरश्चरणांते यथेच्छं स्तोत्रं जपेदित्यर्थः । एवं सिद्धमंत्रस्य वक्ष्यमाणकाम्यप्रयोगान् कुर्यात् । अथ काम्यप्रयोगाः । प्रतिश्लोकमाद्यंतयोर्मंत्रं जपेन्मत्रसिद्धिः ॥ १ ॥ सप्रणवमनुलोमव्याहृतित्रयमादौ अंते तु विलोमं तदित्येवं प्रतिश्लोकं कृत्वा शतावृत्तिपाठेऽतिशीघ्रं सिद्धिः ॥ २ ॥ प्रतिश्लोकमादौ जातवेदसे सुनवाम सोममित्यृचं पठेत्सर्वकामसिद्धिः ॥ ३ ॥ अपमृत्युवारणायादावंते त्र्यंबकमंत्रं पठेत् । प्रतिश्लोकमादावंते तन्मंत्रजप इत्यन्यत्र ॥ ४ ॥ प्रतिश्लोकमादावंते शूलेन पाहि नो देवीति पाठादपमृत्युनाशः अस्य केवलस्यापि श्लोकस्य लक्षमयुतं सहस्रं शतं वा जपेऽपमृत्युवारणम् ॥ ५ ॥ प्रतिश्लोकमादावंते शरणागतदीनार्तेति श्लोकं पठेत्सर्वकार्यसिद्धिः ॥ ॥ ६ ॥ प्रतिश्लोकमादावंते करोतु सा नः शुभेत्यर्धं पठेत्सर्वकार्यसिद्धिः स्वाभीष्टवरप्राप्तये एवं देव्या वरं लब्ध्वेति श्लोकं प्रतिमंत्रमादावंते पठेत् ॥ ८ ॥ सर्वापत्तिवारणाय प्रतिश्लोकमादावंते दुर्गेस्मृतेति पठेत् ॥ अस्य केवलस्यापि श्लोकस्य कार्यानुसारेण लक्षमयुतं सहस्रं शतं वा जपः ॥ ९ ॥ सर्वाबाधेत्यस्य लक्षजपे प्रतिश्लोकपाठे वा श्लोकोक्तं फलम् ॥ १० ॥ इत्थं यदा यदा बाधेति श्लोकजपे महामारीशांतिः ॥ ११ ॥ ततो वव्रे नृपो राज्यमिति मंत्रस्य जपे प्रतिश्लोकमादावंते च पाठे वा पुनः स्वराज्यलाभः ॥ १२ ॥ हिनस्ति दैत्यतेजांसि इत्यनेन सदीपबलिदाने घंटाबंधने च बालग्रहशांतिः ॥ १३ ॥ आद्यावृत्तिमनुलोमेन पठित्वा ततो विपरीतक्रमेण द्वितीयामनुलोमेन तृतीयामित्येवमावृत्तित्रयेण शीघ्रं कार्यसिद्धिः ॥ १४ ॥ सर्वापत्तिवारणाय दुर्गे स्मृतेत्यर्थं ततो यदंति यच्च दूरके इत्यृचं तदंते दारिद्यदुःखेत्यर्धमेवं कार्यानुसारेण लक्षमयुतं सहस्रं शतं वा जपः । आदावंते प्रतिश्लोकपाठे त्ववश्यं कार्यसिद्धिः ॥ १५ ॥ कांसोस्मीत्यृचं आदावंते प्रतिश्लोकं पठेल्लक्ष्मीप्राप्तिः ॥ १६ ॥ प्रतिश्लोकमनृणा अस्मिन्नित्यृचं आदावंते पठेदृणपरिहारः ॥ १७ ॥ मारणार्थमेवमुक्त्वा समुत्पत्येति श्लोकं प्रतिश्लोकमादावंते पठेन्मारणोक्तावृत्तिभिः फलसिद्धिः ॥ १८ ॥ ज्ञानिनामपि-

चेतांसि इति श्लोकजपमात्रेण सद्यो मोहनमित्यनुभवसिद्धम् । प्रतिश्लोकपाद्यावंते तच्छ्लोकपाठे त्ववश्यम् ॥ १९ ॥ रोगानशेषानिति श्लोकस्याद्यावंते प्रतिश्लोकपाठे सकलरोगनाशः । तन्मंत्रजपेपि ॥ २० ॥ इत्युक्ता सा तदा देवी गंभीरेति प्रतिश्लोकपाठे पृथग्जपे वा विद्याप्राप्तिवाग्विकारनाशश्च ॥ २१ ॥ भगवत्या कृतं सर्वमित्यादिद्वादशोत्तरशताक्षरो मंत्रः सर्वकामदः सर्वापन्निवारणश्च ॥ २२ ॥ देवि प्रपन्नार्तिहरे इति श्लोकस्य यथाकार्यं लक्षायुतसहस्रशतान्यतमसंख्याजपे आद्यावंते प्रतिश्लोकपाठे वा सर्वापन्निवृत्तिः सर्वकामप्राप्तिश्च । एषु प्रयोगेषु प्रतिश्लोकं दीपाग्रे केवलमेव नमस्कारकरणेऽतिशीघ्रं सिद्धिः । प्रतिश्लोकं कामबीजसंपुटितस्यैकचत्वारिंशद्दिनं त्रिरावृत्तौ सर्वकामसिद्धिः ॥ २३ ॥ एकविंशतिदिनपर्यंतमुक्तरीत्या प्रत्यहं त्रयोदशावृत्तौ वशीकरणम् ॥ २४ ॥ मायाबीजसंपुटितस्य षट्पल्लवसहितस्य सप्तदिनपर्यंतं त्रयोदशावृत्त्यावुच्चाटनसिद्धिः ॥ २५ ॥ तादृशमेव दिनचतुष्टयमेकादशावृत्तौ सर्वोपद्रवनाशः ॥ २७ ॥ एकोपचंचाशद्दिनपर्यंतं प्रतिश्लोकं श्रीबीजसंपुटितस्य पंचदशावृत्तौ लक्ष्मीप्राप्तिः ॥ २७ ॥ प्रतिश्लोकं वाग्बीजसंपुटितस्य शतावृत्त्या विद्याप्राप्तिः ॥ २८ ॥ ॥ अथ शतचंडीविधिः । मंत्रमहोदधौ । शतचंडीविधानं तु प्रवक्ष्ये प्रीतये नृणाम् । नृपोपद्रव आपन्ने दुर्भिक्षे भूमिकंपने ॥ १ ॥ अतिवृष्ट्यामनावृष्टौ परचक्रभये क्षये । सर्वे विघ्ना विनश्यंति शतचंडीविधौ कृते ॥२॥ रोगाणां वैरिणां नाशो धनपुत्रसमृद्धयः । शंकरस्य भवान्या वा प्रासादनिकटे शुभम् ॥ ३ ॥ मंडपं द्वारवेद्याढ्यं कुर्यात्सध्वजतोरणम् । तत्र कुंडं प्रकुर्वीत प्रतीच्यां मध्यतोपि वा ॥ ४ ॥ स्नात्वा नित्यक्रियां कृत्वा वृणुयाद्दश वाडवान् । जितेंद्रियान्सदाचारान् कुलीनान्सत्यवादिनः ॥ ५ ॥ व्युत्पन्नांश्चंडिकापाठरतान् लज्जादयावतः । मधुपर्कविधानेन स्वर्णवस्त्रादिदानतः ॥ ६ ॥ जपार्थमासनं माला दद्यात्तेभ्योऽपि भोजनम् । ते हविष्यान्नमश्नंतो मंत्रार्थगतमानसाः ॥ ७ ॥ भूमौ शयानाः प्रत्येकं जपेयुश्चंडिकास्तवम् । मार्कंडेयपुराणोक्तं दशकृत्वः सचेतसः ॥ ८ ॥ नवार्णं चंडिकामंत्रं जपेयुश्चायुतं पृथक् । पृथक्संपुटीकरणादिति शेषः । प्रत्येकं ब्राह्मणैरयुतजपः कार्यः ॥ अष्टमीनवमीचतुर्दशीपौर्णिमासीषु यथा शतावृत्तिसमाप्तिर्भवति तथारंभः कर्तव्य इति सांप्रदायिकाः ॥ यजमानः पूजयेच्च कन्यानां नवकं शुभम् ॥ ९ ॥ द्विवर्षाद्या दशाब्दांताः कुमारीः परिपूजयेत् ॥ नाधिकांगीं न हीनांगीं कुष्ठिनीं च व्रणांकिताम् ॥ १० ॥ अंधां काणां केकरां च कुरूपां रोमयुक्तनुम् ॥ दासीजातां रोगयुक्तां दुष्टां कन्यां न पूजयेत् ॥ ११ ॥ विप्रां सर्वेष्टसंसिद्ध्यै यशसे क्षत्रियोद्भवाम् ॥ वैश्यजां धनलाभाय पुत्रास्यै शूद्रजां यजेत् ॥ १२ ॥

द्विवर्षा सा कुमार्युक्ता त्रिमूर्तिर्हायनत्रिका ॥ चतुरब्दा तु कल्याणी पंचवर्षा तु रोहिणी ॥ १३ ॥ षडब्दा कालिका प्रोक्ता चंडिका सप्तहायनी ॥ अष्टवर्षा शांभवी स्याद्दुर्गा तु नवहायनी ॥ १४ ॥ सुभद्रा दशवर्षोक्तास्ता मंत्रैः परिपूजयेत् ॥ तासमावाहने मंत्रः प्रोच्यते शंकरोदितः ॥ १५ ॥ मंत्राक्षरमयीं लक्ष्मीं मातॄणां रूपधारिणीम् ॥ नवदुर्गात्मिकां साक्षात्कन्यामावाहयाम्यहम् ॥१६॥ कुमारिकादिकन्यानां पूजामंत्रान्ब्रुवेऽधुना ॥ १७ ॥ जगत्पूज्ये जगद्वंद्ये सर्वशक्तिस्वरूपिणि ॥ पूजां गृहाण कौमारि जगन्मातर्नमोस्तु ते ॥ १८ ॥ त्रिपुरां त्रिपुराधारां त्रिवर्गज्ञानरूपिणीम् ॥ त्रैलोक्यवंदितां देवीं त्रिमूर्तिं पूजयाम्यहम् ॥ १९ ॥ कालिकात्मिकां कलातीतां कारुण्यहृदयां शिवाम् ॥ कल्याणजननीं देवीं कल्याणीं पूजयाम्यहम् ॥२०॥ अणिमादिगुणाधारामकाराद्यक्षरात्मिकाम् ॥ अनंतशक्तिकां लक्ष्मीं रोहिणीं पूजयाम्यहम् ॥ २१ ॥ कामाचारां शुभां कांतां कालचक्रस्वरूपिणीम् ॥ कामदां करुणोदारां कालिकां पूजयाम्यहम् ॥ २२ ॥ चंडवीरां चंडमायां चंडमुंडप्रभंजनीम् ॥ पूजामि सदा देवीं चंडिकां चंडविक्रमाम् ॥ २३ ॥ सदानंदकरीं शांतां सर्वदेवनमस्कृताम् ॥ सर्वभूतात्मिकां लक्ष्मीं शांभवीं पूजयाम्यहम् ॥ २४ ॥ दुर्गमे दुस्तरे कार्ये भवदुःखविनाशिनि ॥ पूजयामि सदा भक्त्या दुर्गां दुर्गार्तिनाशिनीम् ॥ २५ ॥ सुंदरीं स्वर्णवर्णाभां सुखसौभाग्यदायिनीम् ॥ सुभद्रजननीं देवीं सुभद्रां पूजयाम्यहम् ॥ २६ ॥ एतैर्मंत्रैः पुराणोक्तैस्तां तां कन्यां समर्चयेत् ॥ गंधैः पुष्पैर्भक्ष्यभोज्यैर्वस्त्रैराभरणैरपि ॥ २७ ॥ वेद्यां विरचिते रम्ये सर्वतोभद्रमंडले ॥ घटं संस्थाप्य विधिना तत्रावाह्यार्चयेच्छिवाम् ॥ २८ ॥ तदग्रे कन्यकाश्चापि पूजयेद्ब्राह्मणानपि ॥ उपचारैस्तु विविधैः पूर्वोक्तावरणान्यपि ॥ २९ ॥ एवं चतुर्दिनं कृत्वा पंचमे होममाचरेत् ॥ पायसान्नैस्त्रिमध्वक्तैर्द्राक्षारंभाफलादिभिः ॥ ३० ॥ मातुलिंगैरिक्षुखंडैर्नारिकेरैः पुरैस्तिलैः ॥ जातीफलैराम्रफलैरन्यैर्मधुरवस्तुभिः ॥ ३१ ॥ सप्तशत्या दशावृत्त्या प्रतिमंत्रं हुतं चरेत् ॥ अयुतं च नवार्णेन स्थापितेऽग्नौ विधानतः ॥ ३२ ॥ कृत्वा वरणदेवानां होमं तन्नाममंत्रत ॥ कृत्वा पूर्णाहुतिं सम्यग्देवमग्निं विसृज्य च ॥ ३३ ॥ अभिषिंचेच्च यष्टारं विप्रौघः कलशोदकैः ॥ निष्कं सुवर्णमथवा प्रत्येकं दक्षिणां दिशेत् ॥ ३४ ॥ भोजयच्च शतं विप्रान्न भक्ष्यभोज्यैः पृथग्विधैः ॥ तेभ्योपि दक्षिणां दत्वा गृह्णीयादाशिषस्तथा ॥ ॥ ३५ ॥ एवं कृते जगद्वश्यं सर्वे नश्यंत्युपद्रवाः ॥ राज्यं धनं यशः पुत्रानिष्टमन्यल्लभेत सः ॥ इति मंत्रमहोदधौ शतचंडीविधिः समाप्तः ॥ ॥ अस्य स्तोत्रस्य वाचनक्रमोऽस्मत्परमगुरुचरणकृतदुर्गार्चासारसंग्रहे वाराहीतंत्रे च ॥ यावन्न

पूर्यतेध्यायस्तावन्न विरमेत्पठन् । यदि प्रमादादध्याये विरामो भवति प्रिये । पुन-रध्यायमारभ्य पठेत्सर्वं मुहुर्मुहुः । अनुक्रमात्पठेद्देवि शिरःकंपादिकं त्यजेत् । न मानसं पठेत्स्तोत्रं वाचिकं तु प्रशस्यते । न स्वयं लिखितं स्तोत्रं नाब्राह्मणलिपिं पठेत् । कंठतः पाठाभावे तु पुस्तकोपरि वाचयेदिति । यत्तु आधारे स्थापयित्वा तु पुस्तकं वाचयेत्ततः । हस्तसंस्थापनादेव भवेदर्धफलं ध्रुवमिति । तस्य व्यव-स्थापि तत्रैव । पुस्तके वाचनं हस्ते सहस्रादधिकं यदि । ततो न्यूनस्य तु भवे-द्वाचनं पुस्तकं विना । सहस्रान्यूनमंत्रस्य पाठसत्वे पुस्तकं विनैव वाचनम् । तद-भावे आधारे पुस्तकस्थापनेनैव वाचनम् । सहस्राधिकस्य तु पाठसत्वेवाऽऽधा-रस्थापितपुस्तकोपर्येव वाचनमिति तद्वचनार्थः । प्रकृतस्तोत्रस्य सहस्रान्यूनत्वात्ततः कृतांजलिर्भूत्वा स्तुवीत चरितैरिमैरिति वैकृतिकरहस्ये विधानाच्च । पाठाभावे पुस्तकस्याधारस्थापनेनैव वाचनं कंठपाठीकृत्य पुस्तकं विनैव तु कृतांजलितया पठनमुत्तममिति द्रष्टव्यमिति स्पष्टं शक्तिसंगमतंत्रे । तद्वचनं तु दुर्गाप्रदीपे द्रष्टव्य-मिति लुप्तसृत्याः सप्तशत्याः सरणी रचिता मया । तया तुष्यतु सा देवी बालांबा त्रिपुरेश्वरी ॥ १ ॥ अत्र सर्वमूलवचनान्यस्मद्गुरुचरणकृतदुर्गामहोदधौ द्रष्टव्यानीति शिवम् ॥ इति प्रयोगविधिः समाप्तः । अथास्य सप्तशतीमंत्रविभागस्य प्राचीनोक्ताः कारिका लिख्यंते । मार्कंडेय उवाचे ति प्रथमो मंत्र ईरितः । ततो मंत्राः सप्तदशाप्यर्धश्लोकात्मकस्ततः ॥ १ ॥ वैश्योक्तिरग्रतोर्धं स्याचतो मंत्रास्त्रयः स्मृताः । कथंत इत्यप्यर्धं स्याद्राजोवाचेति मंत्रकः ॥ २ ॥ ततश्चार्धद्वयं मंत्रौ वैश्योक्ति-स्तदनंतरम् ॥ ततोर्धमंत्रः संप्रोक्तस्त्रयः श्लोका मनुत्रयम् ॥ ३ ॥ करोमि किं यदर्धं स्यान्मार्कंडेयवचस्ततः ॥ ततस्ताविदमर्धं स्यादेकः श्लोकात्मको मनुः ॥ ४ ॥ उपविष्टेत्यर्धमंत्रो राजोवाच मनुस्तथा । भगवन्निति चार्धं स्याच्चतुःश्लोकीचतुष्टयम् ॥ ॥ ५ ॥ ममास्येत्यर्धमंत्रः स्यान्मुनिवाक्यं ततः परम् । ज्ञानमस्तीत्यर्धमंत्रो दशमं-त्रास्ततः परम् ॥ ६ ॥ संसारेत्यर्धमंत्रः स्याद्राजोवाच मनुस्ततः । भगवन्केत्यर्धमंत्रो मनुः श्लोकात्मकस्ततः ॥ ७ ॥ तत्सर्वमर्धं मुनिवाक् नित्यैवेत्यर्धमंत्रकः । षण्मंत्रास्तु ततः प्रोक्ता निद्रामित्यर्धमंत्रकः ॥ ८ ॥ ब्रह्मोवाच ततोऽर्धः स्यात्त्रयोदश ततः परम् । बोधश्चेत्यर्धमंत्रः स्यान्मुनिवाक्यं ततः परम् ॥ ९ ॥ एवं स्तुतेत्यर्धमंत्रः पंचमंत्रास्ततः परम् । उक्तवंतावर्धमनुर्भगवद्वाक्यमेव च ॥ १० ॥ भवेतामिदमर्धं स्यात्किम-न्येनेति चार्धकम् । मुनिवाक्यं पुनश्चार्धं ततः स्याच्छ्लोकमंत्रकः ॥ ११ ॥ मुनिवाक्यं ततो मंत्रौ द्वौ प्रोक्तौ चरमौ परौ । इत्येवं प्रथमेध्याये मंत्रसंख्या समीरिता ॥ १२ ॥ द्वितीये ऋषिवाक्यं स्यादष्टषष्टयर्णवः स्मृताः ॥ तृतीये मुनिवाक्यं तु पंचत्रिंशच्च

थार्णवः ॥ १३ ॥ देवीवाक्यं ततश्चैकः श्लोको मुनिवचस्तथा ॥ पंचश्लोकास्ततो मंत्रास्तृतीयेऽध्याय ईरिताः ॥ १४ ॥ चतुर्थे मुनिवाक्यं तु षविंशतिरथार्णवः ॥ मुनिवाक्यं ततो मंत्रद्वयं देवीवचस्तथा ॥ १५ ॥ अर्धं श्लोकात्मको मंत्रो देवा ऊचुस्ततः परम् ॥ भगवत्येत्यर्धमंत्रस्ततः श्लोकत्रयं स्मृतम् ॥१६॥ मुनिवाक्यं वेदमंत्राः स्यादध्यायेऽथ पंचमे ॥ मुनिवाक्यं च षट्श्लोका देवा ऊचुस्ततः परम् ॥१७॥ पंचश्लोकास्तु ते मंत्रा या देवीत्यादितः पुनः ॥ भ्रांतिदेव्यंतिमा मंत्रा एकविंशतिरीरिताः ॥ १८ ॥ तेषां खंडत्रयेणैव त्रिषष्ट्याहुतयोभवन् ॥ विंशत्यक्षरपर्यंतं प्रथमः खंड ईरितः ॥१९॥ वेदाक्षरो द्वितीयस्तु तृतीयोष्टाक्षरः स्मृतः ॥ इंद्रियेत्स्येकमंत्रः स्याच्चितिरूपेति च त्रयम् ॥ २० ॥ पूर्ववच्च ततो मंत्रौ द्वौ मुनेर्वाक्यमेवच ॥ सप्तदशाथ मंत्राः स्युर्मुनिवाक्यं त्रयोर्णवः ॥ २१ ॥ दूतवाक्यं नवश्लोका मुनेर्वाक्यं सकृन्मनुः ॥ देवीवाक्यं वेदमंत्रा दूतवाक्यं ततः परम् ॥ २२ ॥ चत्वारस्तु पुनः श्लोका देवीवाक्यं मनुद्वयम् ॥ अथ षष्ठे मुनेर्वाक्यं चत्वारः श्लोकमंत्रकाः ॥ २३ ॥ ऋषिवाक्यं त्रयो मंत्रा देवीवाक्यं सकृन्मनुः ॥ ऋषिवाक्यं ततः श्लोकमंत्रा द्वादश संमताः ॥२४॥ सप्तमेथ मुनेर्वाक्यं त्रयोविंशतिर्मंत्रकाः ॥ मुनिवाक्यं च मंत्रौ द्वौ भवेतामष्टमे ततः ॥ २५ ॥ मुनिवाक्यं, त्रिषष्ट्यात्माहुतयोर्बाहुतिस्तथा ॥ नवमे राजवाक्यं तु श्लोकद्वयमतः परम् ॥ २६ ॥ मुनिवाक्यं ततः सप्तत्रिंशत् श्लोकास्तु मंत्रकाः ॥ दशमे मुनिवाक्यं तु मंत्रद्वयमतः परम् ॥ २७ ॥ देवीवाक्यं च मंत्रौ द्वौ पुनर्दैव्यैकमंत्रकः ॥ मुनिवाक्यं ततो द्वाविंशत्याहुतय ईरिताः ॥२८॥ अर्धमात्रोंतिमः प्रोक्तस्तत एकादशे पुनः ॥ मुनिवाक्यं चतुस्त्रिंशत् श्लोका देवीवचस्ततः ॥ २९ ॥ एकमंत्रस्ततो देवा ऊचुरित्येष मंत्रकः ॥ एकमंत्रोंबिकावाक्यं चतुर्दश तथार्णवः ॥ ३० ॥ अर्धमंत्रोंतिमः प्रोक्तौ द्वादशेऽथांबिकावचः ॥ अष्टाविंशतिमंत्राः स्युरेकाप्यर्धाहुतिस्तथा ॥ ३१ ॥ पुनर्ऋषिस्ततोर्धं स्यान्नवश्लोकास्त्रयोदशे ॥ एकादशार्धाहुतयो द्वादशश्लोकमंत्रकाः ॥३२॥ उवाचवचनैः षड्भिरेकोनत्रिंशदीरिताः ॥ गौडपादीयभाष्याब्धेः कारिकामृतमुधृतम् ॥ पिबंतु विविधाः सर्वेऽस्मृतिनाशो यतो भवेत् ॥ ३३ ॥ ॥ इति कारिकावलिः समाप्ता ॥ ॥ श्रीगणेशाय नमः ॥ अथ ब्रह्मशापविमोचनप्रारंभः ॥ ॐ अस्य श्रीचंडिकास्तोत्रस्य ब्रह्मशापविमोचनमंत्रस्य वसिष्ठनारदसंवादाधिपत्योर्ब्रह्माऋषिः । सर्वैश्वर्यकारिणीश्रीदुर्गा देवता । चरित्रत्रयबीजम् । ह्रींशक्तिरूपिणिकल्पितकार्यसिद्ध्यर्थे जपेविनियोगः । ॐ रामैः स्वरापायै मधुकैटभमर्दिन्यै ब्रह्मशापविमुक्ता भव । ॐ श्रीबुद्धिरूपिण्यै महिषासुरसैन्यनाशिन्यै ब्रह्मशापविमुक्ता भव ॐ रं रक्तरूपिण्यै महिषासुरमर्दिन्यै शुंभवधकारिण्यै

ब्रह्मशापविमुक्ता भव। ॐ शां शक्तिरूपिण्यै वेदस्तुत्यै ब्रह्मशापविमुक्ता भव। ॐ श्रीं श्रद्धारूपिण्यै फलदाज्यै ब्रह्मशापविमुक्ता भव। ॐ मां मातृरूपिण्यै अनर्गलसहितायै ब्रह्मशापविमुक्ता भव। ॐ श्रीं ह्रीं दुर्गायै सर्वैश्वर्यकारिण्यै ब्रह्मशापविमुक्ता भव। ॐ क्लीं ह्रीं ॐ नमः शिवायै अभेद्यकवचरूपिण्यै ब्रह्मशापविमुक्ता भव। ॐ कल्पकालि ह्रीं फट् स्वाहायै ऋग्वेदरूपिण्यै ब्रह्मशापविमुक्ता भव। ॐ ॥ इति श्रीरुद्रयामले चंडीकाशापमोचनं संपूर्णम् ॥ ॥ ॥



# ॥ अथ चंडीविधानम् ॥

अथोनवाक्षरंमंत्रंवक्ष्येचंडीप्रवृत्तये॥ वाङ्मायामदनोदीर्घालक्ष्मीस्तंद्रीश्रु तींदुयुक् ॥ १ ॥ डायैसद्दग्जलं कूर्मद्वयंझिंटीशसंयुतम् ॥ नवाक्षरोऽस्यऋ षयोब्रह्मविष्णुमहेश्वराः ॥२॥ छंदांस्युक्तानिमुनिभिर्गायत्र्युष्णिगनुष्टुभः ॥ देव्यःप्रोक्तामहापूर्वाः कालीलक्ष्मीःसरस्वती ॥ ३ ॥ नंदाशाकंभरी भीमाःशक्तयोऽस्यमनोःस्मृताः ॥ स्याद्रक्तदंतिकादुर्गाभ्रामर्य्योबीजसं- चयः ॥४॥ अग्निर्वायुर्भगस्तत्त्वंफलंवेदत्रयोद्भवम् ॥ सर्वाभीष्टप्रसिद्ध्य- र्थंविनियोगउदाहृतः ॥५॥ ऋषिश्छंदोदैवतानिशिरोमुखहृदिन्यसेत् ॥ शक्तिबीजानिस्तनयोस्तत्त्वानिहृदयेपुनः ॥ ६ ॥ ततएकादशन्यासा न्कुर्वीतेष्टफलप्रदान् ॥ प्रथमोमातृकान्यासःकार्य्यःपूर्वोक्तमार्गतः ॥७॥ कृतेनयेनदेवस्यसारूप्यंयातिमानवः ॥अथद्वितीयंकुर्वीतन्याससारस्वता भिधम् ॥ ८ ॥ बीजत्रयंतुमंत्राद्यंताराादिहृदयांतिकम् ॥ क्रमादंगुलिषु न्यस्यकनिष्ठाद्यासुपंचसु ॥ ९ ॥ करयोर्मध्यतःपृष्ठेमणिबंधेचकूर्परे ॥ हृदयादिषडंगेषुविन्यसेज्जानिसंयुतम् ॥ १० ॥ अस्मिन्सारस्वतेन्यासे कृतेजाड्यंविनश्यति ॥ ततस्तृतीयंकुर्वीतन्यासंमातृगणान्वितम् ॥११ मायाबीजादिकाब्राह्मीपूर्वतःपातुमांसदा ॥ माहेश्वरीतथाऽग्नेय्यांकौमारी दक्षिणेऽवतु ॥ १२ ॥ वैष्णवीपातुनैरृत्येवाराहीपश्चिमेऽवतु ॥ इंद्राणी पावकेकोणेचामुंडाचोत्तरेऽवतु ॥ १३ ॥ ऐशानेतुमहालक्ष्मीरूर्ध्वंव्योमेश्व रीतथा ॥ सप्तद्वीपेश्वरीभूमौरक्षेत्कामेश्वरीतले ॥ १४ ॥ तृतीयेऽस्मिन्कृ तेन्यासेत्रैलोक्यविजयीभवेत् ॥ न्यासंचतुर्थंकुर्वीतनंदजादिसमन्वितम् ॥ १५ ॥ नंदजापातुपूर्वांगंकमलांकुशमंडिता ॥ खड्गपात्रकरापातुदक्षि णेरक्तदंतिका ॥ १६ ॥ पृष्ठेशाकंभरीपातुपुष्पपल्लवसंयुता ॥ धनुर्बाण करादुर्गावामेपातुसदैवमाम् ॥ १७ ॥ शिरःपात्रकराभीमामस्तकाच्चरणा वधि ॥ पादादिमस्तकंयावाद्भ्रामरीचित्रकांतिभृत् ॥ १८ ॥ तुर्य्यंन्यासं

नरःकुर्य्याज्जरामृत्युव्यपोहति ॥ अथकुर्वीतब्रह्माख्यंन्यासंपंचममुत्तमम् ॥
॥ १९ ॥ पादादिनाभिपर्य्यंतंब्रह्मापातुसनातनः ॥ नाभेर्वीशुद्धिपर्य्यंतं
पातुनित्यंजनार्दनः ॥ २० ॥ विशुद्धेर्ब्रह्मरंध्रांतंपातुरुद्रस्त्रिलोचनः ॥
हंसःपातुपदद्वंद्वंवैनतेयःकरद्वयम् ॥ २१ ॥ चक्षुषीवृषभःपातुसर्वांगानि
गजाननः ॥ परापरौदेहभागौपात्वानंदमयोहरिः ॥ २२ ॥ कृतेऽस्मिन्पं-
चमेन्यासेसर्वान्कामानवाप्नुयात् ॥ षष्ठंन्यासंततःकुर्य्यान्महालक्ष्म्यादिसं-
युतम् ॥ २३ ॥ मध्यंपातुमहालक्ष्मीरष्टादशभुजान्विता ॥ ऊर्ध्वंसरस्वती
पातुभुजैरष्टाभिरूर्जिता ॥ २४ ॥ अधःपातुमहाकालीदशबाहुसमन्विता ॥
सिंहोहस्तद्वयंपातुपरंहंसोक्षियुग्मकम् ॥ २५ ॥ महिषंदिव्यमारूढोयमः
पातुपदद्वयम् ॥ महेशश्चंडिकायुक्तःसर्वांगाानिममावतु ॥ २६ ॥ षष्ठेऽस्मि
न्विहितेन्यासेसद्गतिंप्राप्नुयान्नरः ॥ मूलाक्षरन्यासरूपंन्यासंकुर्वीतसप्तमम्
॥ २७ ॥ ब्रह्मरंध्रेनेत्रयुग्मेश्रुत्योर्नासिकयोर्मुखे ॥ पायौमूलमनोर्वर्णास्ता-
राद्यान्नमसान्वितान् ॥ २८ ॥ विन्यसेत्सप्तमेन्यासेकृतेरोगक्षयोभवेत् ॥
पायुतोब्रह्मरंध्रांतंपुनस्तानेवविन्यसेत् ॥ २९ ॥ कृतेऽस्मिन्नष्टमेन्यासेसर्वं
दुःखंविनश्यति ॥ कुर्वीतनवमंन्यासंमंत्रव्याप्तिस्वरूपकम् ॥ ३० ॥ मस्त-
काच्चरणंयावच्चरणान्मस्तकावधि ॥ पुरोदक्षेपृष्ठेदेशेवामभागेऽष्टशोन्यसेत् ॥
॥ ३१ ॥ मूलमंत्रकृतोन्यासोनवमोदेवतात्मिकृत ॥ ततःकुर्वीतदशमंषडं
गन्यासमुत्तमम् ॥ ३२ ॥ मूलमंत्रंजातियुक्तंहृदयादिषुविन्यसेत् ॥ कृतेऽ
स्मिन्दशमेन्यासेत्रैलोक्यंवशगंभवेत् ॥ ३३ ॥ दशन्यासोक्तफलदंकुर्य्या-
देकादशंततः ॥ खड्गिनीशूलिनीत्यादिपठित्वाश्लोकपंचकम् ॥ ३४ ॥
आद्यंकृष्णतरंबीजंध्यात्वासर्वांगकेन्यसेत् ॥ शूलेनपाहिनोदेवीत्यादि
श्लोकचतुष्टयम् ॥ ३५ ॥ पठित्वासूर्य्यसदृशंद्वितीयंसर्वतोन्यसेत् ॥ स-
र्वस्वरूपेसर्वेशेइत्यादिश्लोकपंचकम् ॥ ३६ ॥ पठित्वास्फटिकाभासंतृ-
तीयंस्वतनौन्यसेत् ॥ ततःषडंगंकुर्वीतविभक्तैर्मूलवर्णकैः ॥ ३७ ॥ एकै
नैकेनचैकेनचतुर्भिर्युगुलेनच ॥ समस्तेनचमंत्रेणकुर्य्यादंगानिषट्सुधीः ॥

॥ ३८ ॥ शिखायांनेत्रयोः श्रुत्योर्नसोर्वक्रेगुदेन्यसेत ॥ मंत्रवर्णान्समस्तेनव्यापकंत्वष्टशश्चरेत ॥ ३९ ॥ खङ्गंचक्रगदेषुचापपरिघाञ्छूलंभुशुंडींशिरः शंखंसंदधतींकरैस्त्रिनयनांसर्वांगभूषावृताम् ॥ यामस्तौत्स्वपितेहरौकमलजोहंतुंमधुंकैटभं नीलाश्मद्युतिमास्यपाददशकांसेवेमहाकालिकाम ॥ ४० ॥ अक्षस्रक्परशूगदेषुकुलिशंपद्मंधनुःकुंडिकांदंडंशक्तिमसिंचचर्मजलजंघंटांसुराभाजनम्॥शूलंपाशसुदर्शनेचदधतींहस्तैःप्रवालप्रभांसेवेसैरिभमर्दिनीमिहमहालक्ष्मींसरोजस्थिताम्॥४१॥घंटाशूलहलानिशंखमुसलेचक्रंधनुः सायकंहस्ताब्जैर्दधतींघनांतविलसच्छीतांशुतुल्यप्रभाम् ॥ गौरीदेहसमुद्भवांत्रिजगतामाधारभूतांमहापूर्वामत्रसरस्वतीमनुभजेशुंभादिदैत्यार्दिनीम्॥४२॥ एवंध्यात्वाजपेल्लक्षचतुष्कंतद्दशांशतः ॥ पायसान्नेनजुहुयात्पूजितेहेमरेतसि ॥ ॥ जयादिशक्तिभिर्युक्ते पीठेदेवींयजेत्ततः ॥ तत्त्वपत्रावृतत्र्यस्रषट्कोणाष्टदलान्विते ॥ ४४ ॥ त्रिकोणमध्येसंपूज्यध्यात्वातांमूलमंत्रतः ॥ पूर्वकोणेविधातारंसुरयासह पूजयेत ॥४५॥ विष्णुंश्रियाचनैर्ऋत्येवायव्येतुमयाशिवम् ॥ उदग्दक्षिणयोःसिंहंमहिषंचक्रमाद्यजेत ॥४६॥ षट्सुकोणेषुपूर्वादिनंदजांरक्तदंतिकाम ॥ शाकंभरींतथादुर्गांभीमांचभ्रामरींयजेत ॥ ४७ ॥ सबिंदुनाद्यवर्णाद्यास्ताराद्याश्चनमोंतिकाः ॥ नंदजाद्यायजेच्छक्तीर्वक्ष्यमाणाअपीदृशीः ॥ ४८॥ अष्टपत्रेषुब्रह्माणीपूज्यामाहेश्वरीपरा॥कौमारीवैष्णवी चाथवाराहीनारसिंह्यपि ॥ ४९ ॥ पश्चादैन्द्रीचचामुंडातथातत्त्वदलेष्विमाः ॥ विष्णुमायाचेतनाचबुद्धिर्निद्राक्षुधाततः ॥ ५० ॥ छायाशक्तिःपरातृष्णाक्षांतिर्जातिश्चलज्जया ॥ शांतिःश्रद्धाकांतिलक्ष्म्यौधृतिर्वृत्तिःश्रुतिःस्मृतिः ॥ ५१ ॥ तुष्टिःपुष्टिर्दयामाताभ्रांतिःशक्तिरिति क्रमात ॥ बहिर्भूगृहकोणेषुगणेशःक्षेत्रपालकः ॥ ५२ ॥ बटुकश्चापियोगिन्यःपूज्याइंद्रादिकाअपि ॥ एवंसिद्धेमनौमंत्रीभवेत्सौभाग्यभाजनम् ॥ ५३ ॥ मार्कण्डेयपुराणोक्तंनित्यंचंडीस्तवंपठन् ॥ पु-

टितंमूलमंत्रेणजपन्नाप्नोतिवांछितम् ॥ ५४ ॥ आश्विनस्यसितेपक्षेआरभ्याग्नितिथिंसुधीः ॥ अष्टम्यंतंजपेल्लक्षंदशांशंहोममाचरेत् ॥ ५५ ॥ प्रत्यहंपूजयेद्देवींपठेत्सप्तशतीमपि ॥ विमानाराध्यमंत्रीस्वमिष्टार्थंलभतेऽचिरात् ॥ ५६ ॥ सप्तशत्याश्चरित्रेतुप्रथमेपद्मभूर्मुनिः ॥ छंदोगायत्रमुदितं महाकालीतुदेवता ॥५७॥ वाग्बीजंपावकस्तत्त्वंधर्मार्थेविनियोजनम् ॥ मध्यमेतुचरित्रेऽत्रमुनिर्विष्णुरुदाहृतः ॥ ५८ ॥ उष्णिकछंदोमहालक्ष्मी देवताबीजमद्रिजा ॥ वायुस्तत्त्वंधनप्राप्त्यैविनियोगउदाहृतः ॥ ५९ ॥ उत्तरस्यचरित्रस्यऋषिःशंकरईरितः ॥ त्रिष्टुप्छन्दोदेवतास्यप्रोक्तामहासरस्वती ॥६०॥ कामोबीजंरविस्तत्त्वंकामाप्त्यैविनियोजनम् ॥ एवंसंस्मृत्यऋष्यादीन्ध्यात्वापूर्वोक्तमार्गतः ॥ ६१ ॥ सार्थस्मृतिपठेचंडीस्तवंस्पष्टपदाक्षरम् ॥ समाप्तौतुमहालक्ष्मींध्यात्वाकृत्वाषडंगकम् ॥ ६२ ॥ जपेदष्टशतंमूलंदेवतायैनिवेदयेत् ॥ एवंयःकुरुतेस्तोत्रंनावसीदतिजातुचित् ॥ ६३ ॥ चंडिकांप्रभजन्मर्त्योधनैर्धान्यैर्यशश्चयैः ॥ पुत्रैःपौत्रैरुतारोग्यैर्युक्तोजीवेद्बहुःसमाः ॥ ६४ ॥

---

## ॥ अथशतचंडीविधानम् ॥

शतचंडीविधानंतुप्रवक्ष्येप्रीतयेनृणाम् ॥ नृपोपद्रवआपन्नेदुर्भिक्षेभूमिकंपने ॥१॥ अतिवृष्ट्यामनावृष्टौपरचक्रभयेक्षये ॥ सर्वेविघ्नाविनश्यंति शतचंडीविधौकृते ॥ २ ॥ रोगाणांवैरिणांनाशोधनपुत्रसमृद्धयः ॥ शंकरस्यभवान्यावाप्रासादान्निकटेशुभम् ॥ ३ ॥ मंडपद्वारवेद्याद्यंकुर्य्यात्सध्वजतोरणम् ॥ तत्रकुंडंप्रकुर्वीतप्रतीच्यांमध्यतोपिवा ॥ ४ ॥ स्नात्वानित्यकृतिंकृत्वावृणुयाद्दशवाडवान् ॥ जितेंद्रियान्सदाचारान्कुलीनान्सत्यवादिनः ॥ ५ ॥ व्युत्पन्नांश्चंडिकापाठरताँल्लज्जादयावतः ॥ मधुपर्कविधानेनवस्त्रस्वर्णादिदानतः ॥ ६ ॥ जपार्थमासनंमालांदद्यात्तेभ्योपिभोजनम् ॥ तेहविष्यान्नमश्नंतोमंत्रार्थगतमानसाः ॥ ७ ॥ भूमौ

शयानाःप्रत्येकंजपेयुश्चंडिकास्तवम् ॥ मार्कंडेयपुराणोक्तंदशकृत्वःसुचेत-
सः ॥८॥ नवार्णंचंडिकामंत्रंजपेयुश्चयुतंपृथक् ॥ यजमानःपूजयेच्चक-
न्यानांदशकंशुभम् ॥९॥ द्विवर्षाद्यादशाब्दांताःकुमारीःपरिपूजयेत् ॥
नाधिकांगींनदीनांगींकुष्ठिनींचव्रणांकिताम् ॥१०॥अंधांकाणांककरांच
कुरूपांरोमयुक्तनुम्॥दासीजातांरोगयुक्तांदुष्टांकन्यांनपुजयेत ११विप्रां
सर्वेष्टसंसिद्ध्यैयशसेक्षत्रियोद्भवाम् ॥ वैश्यानांधनलाभायपुत्रास्यैशूद्रजां
यजेत् ॥१२॥ द्विवर्षासाकुमार्युक्तात्रिमूर्तिर्हायनत्रिका ॥ चतुरब्दातु
कल्याणी पंचवर्षातुरोहिणी ॥ १३ ॥ षडब्दाकालिकाप्रोक्ताचंडिकास-
प्तहायनी ॥ अष्टवर्षाशांभवीस्याद्दुर्गाचनवहायनी॥१४॥सुभद्रादशवर्षा
क्तास्तामंत्रैःपरिपुजयेत ॥ एकाब्दा याः प्रीत्यभावोरुद्राब्दास्तुविवर्जि
ताः ॥ १५ ॥ तासामावाहनेमंत्राःप्रोच्यंतेशंकरोदिताः ॥ मंत्राक्षरम
यींलक्ष्मींमातृणांरूपधारिणीम् ॥ १६ ॥ नवदुर्गात्मिकांसाक्षात्कन्यामा
वाहयाम्यहम् ॥ कुमारिकादिकन्यानांपूजामंत्रान्ब्रुवेऽधुना॥१७॥जग-
त्पूज्येजगद्वंद्येसर्वदेवस्वरूपिणि ॥पूजांगृहाणकौमारिजगन्मातर्नमोस्तुते
॥१८॥त्रिपुरांत्रिपुराधारांत्रिवर्गज्ञानरूपिणीम् ॥ त्रैलोक्यवंदितांदेवींत्रि
मूर्तिंपूजयाम्यहम् ॥ १९ ॥ कलात्मिकांकलातीतांकारुण्यहृदयां
शिवाम् ॥ कल्याणजननींदेवींकल्याणींपूजयाम्यहम् ॥ २० ॥
अणिमादिगुणाधारामकाराद्यक्षरात्मिकाम्॥ अनंतशक्तिकांलक्ष्मींरोहि-
णींपूजयाम्यहम् ॥ २४ ॥ कामचारांशुभांकांतांकालचक्रस्वरूपिणी-
म् ॥ कामदांकरुणोदारांकालिकांपूजयाम्यहम् ॥ २२ ॥ चंडवीरांचंड
मायांचंडमुंडप्रभंजनीम्॥पूजयामिमहादेवींचंडिकांचंडविक्रमाम्॥२३॥
सदानंदकरींशांतांसर्वदेवनमस्कृताम् ॥सर्वभूतात्मिकांदेवींशांभवींपूज-
याम्यहम् ॥२४॥ दुर्गमेदुस्तरेकार्य्येभवार्णवविनाशिनि ॥ पूजयामिस
दाभक्त्यादुर्गांदुर्गार्तिनाशिनीम् ॥२५॥ सुंदरींस्वर्णवर्णाभांसुखसौभाग्य
दायिनीम्॥सुभद्राजननींदेवींसुभद्रांपूजयाम्यहम्॥२६ ॥ एतैर्मंत्रैःपुरा-

णोक्तैःस्नातांकन्यांप्रपूजयेत॥गंधैःपुष्पैर्भक्ष्यभोज्यैर्वस्त्रैराभरणैरपि॥२७॥ वेद्यांविरचितेरम्येसर्वतोभद्रमंडले॥ घटंसंस्थाप्यविधिवत्तत्रावाह्यार्चयेच्छिवाम्॥ २८ ॥ तदग्रेकन्यकाश्चापिपूजयेद्ब्राह्मणानपि ॥ उपचारैस्तु विविधैः पूर्वोक्तावरणान्यपि ॥ २९ ॥ एवंचतुर्दिनंकृत्वापंचमेहोममाचरेत् ॥ पायसान्नैस्त्रिमध्वक्तैर्द्राक्षारंभाफलैरपि ॥ ३० ॥ मातुलिंगैरिक्षुखंडैर्नारिकेलैःपुरैस्तिलैः॥ जातीफलैराम्रफलैरन्यैर्मधुरवस्तुभिः ॥३१॥ सप्तशत्यादशावृत्त्याप्रतिश्लोकंहुतंचरेत ॥ अयुतंचनवार्णेनस्थापिताग्नौ विधानतः ॥ ३२ ॥ कृत्वावरणदेवानांहोमंतन्नाममंत्रतः ॥ कृत्वापूर्णाहुतिंसम्यग्देवमग्निंविसर्ज्यच ॥ ३३ ॥ अभिषिंचेचयष्टारंविप्रौघःकलशोदकैः ॥ निष्कंसुवर्णमथवाप्रत्येकंदक्षिणांदिशेत ॥ ३४ ॥ भोजयेच्च शतंविप्रान्भक्ष्यभोज्यैःपृथग्विधैः ॥ तेभ्योऽपिदक्षिणांदत्त्वागृह्णीयादाशिषस्ततः ॥३५॥ एवंकृतेजगद्वश्यंसर्वेनश्यंत्युपद्रवाः ॥ राज्यंधनंयशःपुत्रानिष्टमन्यल्लभेतसः ॥ ३६ ॥ एतद्दशगुणंकुर्य्याच्चंडीसाहस्रजंविधिम् ॥ विद्यावतःसदाचारान्ब्राह्मणान्वृणुयाच्छतम् ॥ ३७ ॥ प्रत्येकंचंडिकापाठान्विदध्युस्तेदिशामितान् ॥ अयुतंप्रजपेयुस्तेप्रत्येकंनववर्णकम् ॥ ३८ ॥ पूर्वोक्ताःकन्यकाःपूज्याःपूर्वमंत्रैःशतंशुभाः ॥ एवंदशाहंसंपाद्योहोमंकुर्य्युःप्रयत्नतः ॥ ३९ ॥ सप्तसत्याःशतावृत्त्याप्रतिश्लोकं विधानतः ॥ लक्षसंख्यंनवार्णेनपूर्वोक्तैर्द्रव्यसंचयैः ॥ ४० ॥ होतृभ्यो दक्षिणांदत्त्वापूर्वोक्तान्भोजयेद्द्विजान् ॥सहस्रसंमितान्साधून्देव्याराधनतत्परान् ॥ ४१ ॥ एवंसहस्रसंख्याकेकृतेचंडीविधौनृणाम् ॥ सिद्ध्यत्यभीप्सितंसर्वंदुःखौघश्चविनश्यति ॥ ४२ ॥ मारीदुर्भिक्षरोगाद्यानश्यंतिव्यसनोच्चयाः ॥ नेमंविधिंवदेद्दुष्टेखलेचौरेगुरुद्रुहि ॥ ४३ ॥ साधौ जितेंद्रियेदांतेवदेद्विधिमंपरम् ॥ एवंसाचंडिकातुष्टावक्तुःश्रोतृंश्चरक्षति ॥ ४४ ॥

---



अथ

# दुर्गासप्तशती

## भाषाटीकासहिता ।

अथ संकल्पः ।

अद्येत्यादि० श्रीमहाकालीमहालक्ष्मीमहासरस्वतीदेवताप्रीत्यर्थं चण्डीसप्तशतीपाठाख्यं कर्म करिष्ये । तदङ्गत्वेनादौ कवचार्गलाकीलकपठनमाद्यन्तयोरष्टोत्तरशतसंख्यनवार्णजपपूर्वकं क्रमेण रात्रिसूक्तदेवीसूक्तपठनमन्ते रहस्यत्रयपठनं च करिष्ये । इति संकल्प्य ॥ प्रथमम् । नमो देव्यै महादेव्यै शिवायै सततं नमः ॥ नमः प्रकृत्यै भद्रायै नियताः प्रणताः स्म ताम् ॥ इति मन्त्रेण पञ्चोपचारैः पुस्तकपूजां कुर्यात् ।

अथ देवीकवचम् ।

ॐ नमश्चण्डिकायै । मार्कण्डेय उवाच ।

ॐ यद्गुह्यं परमं लोके सर्वरक्षाकरं नृणाम् ॥
यन्न कस्यचिदाख्यातं तन्मे ब्रूहि पितामह ॥ १ ॥

ॐ नमश्चण्डिकायै । मार्कण्डेय ऋषि कहने लगे कि–हे ब्रह्माजी ! संसारमें जो परमगुप्तहै, मनुष्योंकी सबप्रकारसे रक्षा करनेवालाहै और जो पहले किसीसे कहा नहींहै वह मेरे अर्थ कहो ॥ १ ॥

ब्रह्मोवाच ।

अस्ति गुह्यतमं विप्र सर्वभूतोपकारकम् ॥
देव्यास्तु कवचं पुण्यं तच्छृणुष्व महामुने ॥ २ ॥

ब्रह्माजी कहने लगे कि–हे विप्र! जो अत्यंत गुप्त, संपूर्ण प्राणियोंका उपकारक और पवित्र देवीका कवचहै हे महामुने! उसको सुनो॥ २॥

प्रथमं शैलपुत्री च द्वितीयं ब्रह्मचारिणी॥
तृतीयं चन्द्रघण्टेति कूष्माण्डेति चतुर्थकम्॥ ३॥
पञ्चमं स्कन्दमातेति षष्ठं कात्यायनीति च॥
सप्तमं कालरात्रीति महागौरीति चाष्टमम्॥ ४॥
नवमं सिद्धिदात्री च नव दुर्गाः प्रकीर्तिताः॥
उक्तान्येतानि नामानि ब्रह्मणैव महात्मना॥ ५॥

पहिली शैलपुत्री, दूसरी ब्रह्मचारिणी, तीसरी चंद्रघंटा, चौथी कूष्माण्डा॥ ३॥ पांचवी स्कन्दमाता, छठीं कात्यायनी, सातवीं कालरात्री, आठवीं महागौरी॥ ४॥ और नवीं सिद्धिदात्री इस प्रकार जो ये नौ दुर्गाएँ कहीहैं इनके नाम महात्मा ब्रह्माजीने कहेहैं॥ ५॥

अग्निना दह्यमानस्तु शत्रुमध्ये गतो रणे॥
विषमे दुर्गमे चैव भयार्ताः शरणं गताः॥ ६॥
न तेषां जायते किंचिदशुभं रणसंकटे॥
नापदं तस्य पश्यामि शोकदुःखभयं नहि॥ ७॥

अग्निसे जलता हुवा, शत्रुवोंके मध्य प्राप्त हुवा, रण और बडे संकटमें प्राप्त हुवा ऐसे मनुष्य और भयसे पीडित होकर किसी शरणको प्राप्त हुए मनुष्य जो इन नामोंका स्मरण करतेहैं॥ ६॥ उनके रणसंकटमें किंचित्मात्र भी अशुभ नहीं होताहै और उसके विपात्तियां नहीं देखताहूं तथा शोक, दुःख और भय इनमें से भी किसीको नहीं देखताहूं॥ ७॥

यैस्तु भक्त्या स्मृता नूनं तेषां वृद्धिः प्रजायते ॥
ये त्वां स्मरन्ति देवेशि रक्षसे तान्न संशयः ॥ ८ ॥
प्रेतसंस्था तु चामुण्डा वाराही महिषासना ॥
ऐन्द्री गजसमारूढा वैष्णवी गरुडासना ॥ ९ ॥
माहेश्वरी वृषारूढा कौमारी शिखिवाहना ॥
लक्ष्मीः पद्मासना देवी पद्महस्ता हरिप्रिया ॥ १० ॥
श्वेतरूपधरा देवी ईश्वरी वृषवाहना ॥
ब्राह्मी हंससमारूढा सर्वाभरणभूषिता ॥ ११ ॥

और हे देवेशि! जिनने भक्तिपूर्वक तुह्मारा स्मरण कियाहै निश्चय उनकी वृद्धि होतीहै और जो तुह्मारा स्मरण करतेहैं उनकी तुम निःसंदेह रक्षा करती हो ॥८॥ चामुंडा देवी प्रेतपर स्थित होतीहै अर्थात् प्रेतकी सवारी करती है, वाराही भैंसेकी, ऐन्द्री हस्तीकी, वैष्णवी गरुडकी ॥ ९ ॥ माहेश्वरी वृषकी, कौमारी मयूर (मोर) की सवारी करतीहै और हाथमें कमललिये विष्णुकी प्रिया लक्ष्मी देवी कमलमें स्थित होतीहै ॥ १० ॥ और श्वेतरूपको धारण करनेवाली ईश्वरी देवी बैलकी सवारी करती है संपूर्ण आभूषणोंसे भूषित ब्राह्मी देवी हंसकी सवारी करती है ॥ ११ ॥

इत्येता मातरः सर्वाः सर्वयोगसमन्विताः ॥
नानाभरणशोभाढ्या नानारत्नोपशोभिताः ॥१२॥
दृश्यन्ते रथमारूढा देव्यः क्रोधसमाकुलाः ॥
शंखं चक्रं गदां शक्तिं हलं च मुसलायुधम् ॥
खेटकं तोमरं चैव परशुं पाशमेव च ॥ १३ ॥
कुन्तायुधं त्रिशूलं च शार्ङ्गमायुधमुत्तमम् ॥

दैत्यानां देहनाशाय भक्तानामभयाय च ॥ १४ ॥
धारयन्त्यायुधानीत्थं देवानां च हिताय वै ॥
नमस्तेऽस्तु महारौद्रे महाघोरपराक्रमे ॥ १५ ॥

इस प्रकार ये संपूर्ण माताएँ (देवियों) संपूर्णयोगोंसे युक्त, अनेक प्रकारके आभूषणोंकी शोभासे युक्त, नानाप्रकारके रत्नोंसे शोभित ॥ १२ ॥ क्रोधसे आकुलहुई रथकी सवारी किये दीखपड़ती हैं और शंख, चक्र, गदा, शक्ति, हल, मुसल, खेटक, तोमर, फरसा, फाँसी ॥ १३ ॥ भाला, त्रिशूल और उत्तम आयुध शार्ङ्गनामा धनुष इस प्रकार इन आयुधों ( हथियारों ) को दैत्योंके शरीरोंके नाशके लिये, भक्तोंके अभयके लिये और देवताओंके हितके लिये ये देवियां धारण करती हैं. हे महारौद्रे ! तुझको नमस्कार है. हे महाघोरपराक्रमे ! तुझको नमस्कारहै ॥ १४ ॥ १५ ॥

महाबले महोत्साहे महाभयविनाशिनि ॥
त्राहि मां देवि दुष्प्रेक्ष्ये शत्रूणा भयवर्धिनी ॥ १६॥
प्राच्यां रक्षतु मामैन्द्री आग्नेय्यामग्निदेवता ॥
दक्षिणेऽवतु वाराही नैर्ऋत्यां खड्गधारिणी ॥ १७ ॥

हे महाबलवाली ! हे महान्उत्साहवाली ! हे महाभयको नाशकरनेवाली! हे दुःखसे दर्शन देनेवाली! हे शत्रुवोंको भय बढानेवाली! देवि ! मेरी रक्षा करो ॥ १६ ॥ ऐन्द्री देवी पूर्वमें मेरी रक्षा करो. अग्निदेवता अग्निकोणमें रक्षा करो. वाराही देवी दक्षिणमें रक्षा करो. खड्गधारिणी देवी नैर्ऋतिकोणमें रक्षा करो ॥ १७ ॥

प्रतीच्यां वारुणी रक्षेद्वायव्या मृगवाहिनी ॥
उदीच्यां पातु कौमारी ईशान्यां शूलधारिणी ॥१८॥
ऊर्ध्वं ब्रह्माणी मे रक्षेदधस्ताद्वैष्णवी तथा ॥

एवं दशदिशो रक्षेच्चामुण्डा शववाहना ॥ १९ ॥
जया मे चाग्रतः पातु विजया पातु पृष्ठतः ॥
अजिता वामपार्श्वे तु दक्षिणे चापराजिता ॥ २० ॥
शिखामुद्योतिनी रक्षेदुमा मूर्ध्नि व्यवस्थिता ॥
मालाधरी ललाटे च भ्रुवौ रक्षेद्यशस्विनी ॥ २१ ॥

और वारुणी देवी पश्चिममें रक्षा करो, मृगवाहिनी देवी वायुकोणमें रक्षा करो, कौमारी उत्तरमें रक्षा करो, शूलधारिणी देवी ईशानकोणमें रक्षा करो ॥ १८ ॥ ब्रह्माणी ऊपरसे रक्षा करो और वैष्णवी नीचेसे रक्षा करो. इसीप्रकार शव (मुरदा) की सवारी करनेवाली देवी दशों दिशाओंमें रक्षा करो ॥ १९ ॥ जया देवी आगेसे मेरी रक्षा करो, विजया पीछेसे रक्षा करो, अजिता बाईओरसे रक्षा करो, और अपराजिता देवी दाहिनीओरसे रक्षा करो ॥ २० ॥ उद्योतिनी देवी शिखाकी रक्षा करो, उमा शिरमें रक्षा करो, मालाधरी ललाटमें रक्षा करो, यशस्विनी भ्रुकुटियोंकी रक्षा करो ॥२१॥

त्रिनेत्रा च भ्रुवोर्मध्ये यमघण्टा च नासिके ॥
शंखिनी चक्षुषोर्मध्ये श्रोत्रयोर्द्वारवासिनी ॥ २२ ॥
कपोलौ कालिका रक्षेत्कर्णमूले तु शांकरी ॥
नासिकायां सुगन्धा च उत्तरोष्ठे च चर्चिका ॥ २३ ॥
अधरे चामृतकला जिह्वायां च सरस्वती ॥
दन्तान् रक्षतु कौमारी कण्ठदेशे तु चण्डिका ॥२४॥

और त्रिनेत्रा देवी भ्रुकुटियोंके मध्यमें रक्षा करो, यमघंटा नासिकाके पुटोंकी रक्षा करो. शंखिनी नेत्रोंके मध्यमें और द्वारवासिनी कानोंमें रक्षा करो ॥ २२ ॥ कालिका कपोलोंकी औरशाङ्करी कर्णमूलोंकी रक्षा करो; सुगन्धा नासिकामें और चर्चिका ऊपरके होठमें

रक्षा करो॥२३॥अमृतकला नीचेके होठकी और सरस्वती जिह्वाकी रक्षा करो और कौमारी दाँतोंकी,चण्डिका कंठभागकी रक्षा करो २४

घण्टिका चित्रघण्टा च महामाया च तालुके ॥
कामाक्षी चिबुकं रक्षेद्वाचं मे सर्वमङ्गला ॥ २५ ॥
ग्रीवायां भद्रकाली च पृष्ठवंशे धनुर्धरी ॥
नीलग्रीवा बहिःकण्ठे नलिकां नलकूबरी ॥ २६ ॥
स्कन्धयोःखड्गिनी रक्षेद्बाहू मे वज्रधारिणि ॥
हस्तयोर्दण्डिनी रक्षेदम्बिका चाङ्गुलीषु च ॥ २७ ॥

चित्रघंटा घँट्टूकी, महामाया तालुकी, कामाक्षी ठोडीकी और सर्वमंगला वाणीकी रक्षा करो ॥२५॥ भद्रकाली ग्रीवाकी, धनुर्धरी पीठके बांसकी,नीलग्रीवा कंठके बाहिरकी और नलकूबरी नाड़की नलियोंकी रक्षा करो ॥ २६ ॥ खड्गिनी कन्धोंकी,वज्रधारिणी भुजाओंकी,दण्डिनी दोनों हाथोंकी और अम्बिका संपूर्ण अंगुलियोंकी रक्षा करो ॥ २७ ॥

नखाञ्छूलेश्वरी रक्षेत् कुक्षौ रक्षेत्कुलेश्वरी ॥
स्तनौ रक्षेन्महादेवी मनःशोकविनाशिनी ॥ २८ ॥
हृदये ललिता देवी उदरे शूलधारिणी ॥
नाभौ च कामिनी रक्षेद्गुह्यं गुह्येश्वरी तथा ॥ २९ ॥
पूतना कामिका मेढ्रं गुदे महिषवाहिनी ॥
कट्यां भगवती रक्षेज्जानुनी विन्ध्यवासिनी ॥ ३० ॥

शूलेश्वरी नखोंकी, कुलेश्वरी कुक्षिकी, महादेवी स्तनोंकी और शोकविनाशिनी मनकी रक्षा करो ॥२८॥ ललिता देवी हृदयकी,शूलधारिणी उदरकी, कामिनी नाभिकी और गुह्येश्वरी गुह्यकी रक्षा करो

॥ २९ ॥ पूतना कामिका लिंगकी, महिषवाहिनी गुदाकी, भगवती कटिकी और विन्ध्यवासिनी देवी दोनों गोडोंकी रक्षा करो॥३०॥

जंघे महाबला रक्षेत्सर्वकामप्रदायिनी ॥
गुल्फयोर्नारसिंही च पादपृष्ठे तु तैजसी ॥ ३१ ॥
पादाङ्गुलीषु श्री रक्षेत्पादाधःस्थलवासिनी ॥
नखान्दंष्ट्रकराली च केशांश्चैवोर्ध्वकेशिनी ॥ ३२ ॥
रोमकूपेषु कौमारी त्वचं वागीश्वरी तथा ॥
रक्तमज्जावसामांसान्यस्थिमेदांसि पार्वती ॥ ३३ ॥

सर्वकामनाओंकी देनेवालीमहाबलाजंघाओंकी,नारसिंही गुल्फों-(घुटनों) की और तैजसी देवी पावोंके पृष्ठभागकी रक्षा करो ॥३१॥ श्रीधरी पावोंके अंगुलियोंकी, तलवासिनी पावोंके अधोभागों ( तलुवों) की रक्षा करो, करालिनी दंष्ट्राओं (डाढों) की और ऊर्ध्वकेशिनी केशोंकी रक्षा करो ॥३२॥ कौमारी रोमकूपोंकी, वागीश्वरी त्वचाकी, और पार्वती रक्त, मज्जा, वसा, मांस, हड्डियां और मेद इनकी रक्षा करो ॥ ३३ ॥

अन्त्राणि कालरात्रिश्च पित्तं च मुकुटेश्वरी ॥
पद्मावती पद्मकोशे कफे चूडामणिस्तथा ॥ ३४ ॥
ज्वालामुखी नसाजालमभेद्या सर्वसंधिषु ॥
शुक्रं ब्रह्माणी मे रक्षेच्छायां छत्रेश्वरी तथा ॥ ३५ ॥
अहंकारं मनो बुद्धिं रक्षेन्मे धर्मधारिणी ॥
प्राणापानौ तथा व्यानमुदानं च समानकम् ॥ ३६ ॥

कालरात्रि आँतोंकी, मुकुटेश्वरी पित्तकी, पद्मावती पद्मकोशकी और चूडामणि कफकी रक्षा करो ॥३४॥ ज्वालामुखी नसाजालकी,

अभेद्या सर्वसंधियोंकी, ब्रह्माणी वीर्यकी और छत्रेश्वरी छायाकी रक्षा करो ॥ ३५ ॥ धर्मधारिणी मेरे अहंकार, मन और बुद्धिकी रक्षा करो. प्राण, अपान, व्यान, उदान, और समानकी वज्रहस्ता रक्षा करो ३६

वज्रहस्ता च मे रक्षेत्प्राणं कल्याणशोभना ॥
रसे रूपे च गन्धे च शब्दे स्पर्शे च योगिनी ॥ ३७ ॥
सत्त्वं रजस्तमश्चैव रक्षेन्नारायणी सदा ॥
आयू रक्षतु वाराही धर्मं रक्षतु वैष्णवी ॥ ३८ ॥
यशः कीर्तिं च लक्ष्मीं च धनं विद्यां च चक्रिणी ॥
गात्रमिन्द्राणी मे रक्षेत्पशून्मे रक्ष चण्डिके ॥ ३९ ॥
पुत्रान्रक्षेन्महालक्ष्मी भार्यां रक्षतु भैरवी ॥
पन्थानं सुपथा रक्षेन्मार्गंक्षेमकरी तथा ॥ ४० ॥

मेरे प्राणकी कल्याणशोभना रक्षा करो और योगिनी देवी रस, रूप, गन्ध, शब्द और स्पर्श इनकी रक्षा करो ॥ ३७ ॥ नारायणी संपूर्णकालमें सत्त्व, रज और तमकी रक्षा करो, वाराही आयुकी और वैष्णवी धर्मकी रक्षा करो ॥३८॥ चक्रिणी यश, कीर्ति, लक्ष्मी, धन और विद्याकी रक्षा करो. इन्द्राणी मेरे शरीरकी रक्षा करो और हे चण्डिके ! तुम मेरे पशुवोंकी रक्षा करो ॥ ३९ ॥ महालक्ष्मी पुत्रोंकी और भैरवी भार्याकी रक्षा करो और मार्गमें कुशल करनेवाली सुपथा देवी मार्गकी रक्षा करो ॥ ४० ॥

राजद्वारे महालक्ष्मीर्विजया सर्वतः स्थिता ॥
रक्षाहीनं तु यत्स्थानं वर्जितं कवचेन तु ॥ ४१ ॥
तत्सर्वं रक्ष मे देवि जयन्ती पापनाशिनी ॥
पदमेकं न गच्छेत्तु यदीच्छेच्छुभमात्मनः ॥४२॥

कवचेनावृतो नित्यं यत्र यत्रैव गच्छति ॥
तत्र तत्रार्थलाभश्च विजयः सार्वकामिकः ॥ ४३ ॥

महालक्ष्मी राजद्वारमें रक्षा करो और विजया चारों तरफ स्थित हुई रक्षा करो और जो स्थान रक्षाहीनहै और कवचसे वर्जितहै॥४१॥ उस संपूर्णकी पापोंका नाश करनेवाली जयंती देवी रक्षा करो जो मनुष्य अपने शुभकी इच्छा चाहे तो कवचके विना एक पैंड भी गमन न करे ॥ ४२ ॥ नित्य कवचसे आवृत हुवा मनुष्य जहाँ२जाताहै वहाँ२ द्रव्यलाभ और संपूर्ण कामनाओंको सिद्ध करनेवाला विजय पाताहै॥

यं यं चिन्तयते कामं तं तं प्राप्नोति निश्चितम् ॥
परमैश्वर्यमतुलं प्राप्स्यते भूतले पुमान् ॥ ४४ ॥
निर्भयो जायते मर्त्यः संग्रामेष्वपराजितः ॥
त्रैलोक्ये तु भवेत्पूज्यः कवचेनावृतः पुमान् ॥ ४५ ॥
इदं तु देव्याः कवचं देवानामपि दुर्लभम् ॥
यः पठेत्प्रयतो नित्यं त्रिसन्ध्यं श्रद्धयान्वितः॥४६॥

और पुरुष जिस २ कामनाको चिंतन करताहै निश्चय करके उस उसको प्राप्त होताहै और पृथ्वीतलपर अतुल ( अपार ) ऐश्वर्यको प्राप्त होताहै ॥ ४४ ॥ और कवचसे आवृत ( आच्छादित ) हुवा मनुष्य नहीं जिताहुवा होकर युद्धमें निर्भय होजाताहै और त्रैलोक्यमें पूज्य होजाताहै ॥ ४५ ॥ यह देवीका कवच तो देवताओंको भी दुर्लभहै. श्रद्धायुक्त और निश्चल हुवा जो मनुष्य नित्य तीनों संध्याओंमें इस कवचका पाठ करताहै ॥ ४६ ॥

दैवी कला भवेत्तस्य त्रैलोक्येष्वपराजितः ॥
जीवेद्वर्षशतं साग्रमपमृत्युविवर्जितः ॥४७॥

नश्यन्ति व्याधयः सर्वे लूताविस्फोटकादयः ॥
स्थावरं जंगमं चैव कृत्रिमं चापि यद्विषम् ॥ ४८ ॥
अभिचाराणि सर्वाणि मन्त्रयन्त्राणि भूतले ॥
भूचराः खेचराश्चैव जलजाश्चोपदेशिकाः ॥ ४९ ॥
सहजा कुलजा माला डाकिनी शाकिनी तथा ॥
अन्तरिक्षचरा घोरा डाकिन्यश्च महाबलाः ॥ ५० ॥

उसको दैवीकला प्राप्त होतीहै त्रैलोक्यमें अजितहोताहै और अपमृत्युसे रहित होकर सौ वर्षोंसे ऊपरतक जीताहै॥४७॥लूता विस्फोटक आदि संपूर्ण व्याधियां नष्ट होजातीहैं स्थावरविष,जंगमविष और कृत्रिमविष ॥४८॥ और पृथ्वीपर होनेवाले संपूर्ण अभिचार मंत्र,यंत्र, भूचरप्राणी, खेचरप्राणी,जलचरप्राणी और उपदेशिक॥ ४२ ॥ साथ उत्पन्नहुए रोग, कुलमें उत्पन्नहुए रोग, गंडमाला, डाकिनी,शाकिनी, अंतरिक्षचर प्राणी और महाबलवाली घोर डाकिनियां ॥ ५० ॥

ग्रहभूतपिशाचाश्च यक्षगन्धर्वराक्षसाः ॥
ब्रह्मराक्षसवेतालाः कूष्माण्डा भैरवादयः ॥ ५१ ॥
नश्यन्ति दर्शनात्तस्य कवचे हृदि संस्थिते ॥
मानोन्नतिर्भवेद्राज्ञस्तेजोवृद्धिकरं परम् ॥ ५२ ॥
यशसा वर्धते सोऽपि कीर्तिमण्डितभूतले ॥
जपेत्सप्तशतीं चण्डीं कृत्वा तु कवचं पुरा ॥ ५३ ॥

ग्रह, भूत, पिशाच, यक्ष, गंधर्व,राक्षस, ब्रह्मराक्षस,वेताल, कूष्माण्ड और भैरवादि॥५१॥कवच हृदयविषे स्थित होनेके कारण इस मनुष्यके दर्शनसे ये संपूर्ण नष्ट होजाते हैं. और इस कवचसे मानकी उन्नति होती है और राजाके तेजको बढ़ानेवाला तो केवल यह कवचही है अन्य कवचादि नहीं ॥५२॥ जो मनुष्य प्रथम इस कवचका

पाठ करके पश्चात् चंडीसप्तशतीका पाठ करता है. पृथ्वीतलमें उसके यश और कीर्ति वृद्धिको प्राप्त होतेहैं ॥ ५३ ॥

यावद्भूमण्डलं धत्ते सशैलवनकाननम् ॥
तावत्तिष्ठति मेदिन्यां सन्ततिः पुत्रपौत्रिकी ॥ ५४ ॥
देहान्ते परमं स्थानं यत्सुरैरपि दुर्लभम् ॥
प्राप्नोति पुरुषो नित्यं महामायाप्रसादतः ॥ ५५ ॥
लभते परमं रूपं शिवेन सह मोदते ॥ ५६ ॥

इति वाराहपुराणे हरिहरब्रह्मविरचितं
देव्याः कवचं समाप्तम् ।

और भूमंडल जबतक पर्वत बगीचे वनोंको धारण करताहै तबतक इस कवचका पाठ करनेवाले मनुष्यकी संतति पृथ्वीपर स्थित रहती है ॥५४॥ और महामायाकी कृपासे यह मनुष्य शरीरके अंतमें उस परम स्थानको नित्य प्राप्त रहताहै कि, जो देवताओंको भी दुर्लभ है ॥ ५५ ॥ और यह पुरुष परम रूपको प्राप्त हुवा शिवजीके संग आनंद करताहै ॥ ५६ ॥

इति वाराहपुराणान्तर्गत हरिहरब्रह्म विरचित देवी-
कवचभाषाटीका समाप्ता ॥

# अथार्गलास्तोत्रम् ।

ॐनमश्चण्डिकायै ।

जयन्ती मङ्गला काली भद्रकाली कपालिनी ॥
दुर्गा क्षमा शिवा धात्री स्वाहा स्वधा नमोस्तुते ॥ १ ॥

जय त्वं देवि चामुण्डे जय भूतार्तिहारिणि ॥
जय सर्वगते देवि कालरात्रि नमोस्तु ते ॥ २ ॥
मधुकैटभविद्रावि विधातृवरदे नमः ॥
रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥ ३ ॥

ॐ नमश्चण्डिकायै । जयन्ती मङ्गला काली भद्रकाली कपालिनी दुर्गा क्षमा शिवा धात्री स्वाहा स्वधारूपोंवाली तुझ देवीको नमस्कारहै ॥ १ ॥ हे देवि ! तुम्हारी जय हो. हे चामुण्डे ! तुम्हारी जय हो । हे प्राणियोंकी पीडा हरनेवाली ! तुम्हारी जय हो ! हे सर्वगते ! हे देवि ! तुम्हारी जय हो । हे कालरात्रि ! तुझको नमस्कार है ॥ २ ॥ हे मधुकैटभके नाश करनेवाली ! हे ब्रह्माको वर देनेवाली ! हे देवि ! तुझको नमस्कार है । हे देवि ! मुझको रूप दो, जय दो, यश दो और मेरे शत्रुवोंको नष्ट करो ॥ ३ ॥

महिषासुरनिर्णाशि भक्तानां सुखदे नमः ॥
रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥ ४ ॥
रक्तबीजवधे देवि चण्डमुण्डविनाशिनि ॥
रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥ ५ ॥
शुम्भस्य वै निशुम्भस्य धूम्राक्षस्य च मर्दिनि ॥
रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥ ६ ॥

हे महिषासुरको नाश करनेवाली! हे भक्तोंको सुख देनेवाली ! हे देवि ! तुझको नमस्कारहै।मुझको रूप दो, जय दो, यश दो और मेरे शत्रुवोंको नष्ट करो ॥ ४ ॥ हे रक्तबीजका वध करनेवाली! हे चंड मुंडका नाश करनेवाली! हे देवि! मुझको रूप दो, जय दो,यश दो और मेरे शत्रुवोंको नष्ट करो॥५॥हे शुंभ निशुंभ और धूम्राक्षके

मर्दन करनेवाली देवि ! मुझको रूप दो, जय दो, यश दो और मेरे शत्रुवोंको नष्ट करो ॥ ६ ॥

वन्दिताङ्घ्रियुगे देवि सर्वसौभाग्यदायिनि ॥
रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥ ७ ॥
अचिन्त्यरूपचरिते सर्वशत्रुविनाशिनि ॥
रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥ ८ ॥
नतेभ्यः सर्वदा भक्त्या चण्डिके दुरितापहे ॥
रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥ ९ ॥

हे वन्दित चरणारविन्दोंवाली ! हे संपूर्ण सौभाग्य देनेवाली ! हे देवि ! मुझको रूप दो, जय दो, यश दो और मेरे शत्रुवोंको नष्ट करो ॥ ७ ॥ हे अचिंत्य रूप और चरितोंवाली ! हे संपूर्ण शत्रुवोंको नष्ट करनेवाली ! हे देवि ! मुझको रूप दो, जय दो, यश दो और मेरे शत्रुवोंको नष्ट करो ॥ ८ ॥ हे चंडिके ! दुःखोंको नष्ट करनेवाली ! हे देवि ! भक्तिसे संपूर्ण कालमें नम्र हुए अपने भक्तोंको रूप दो,जय दो,यश दो और उनके शत्रुवोंको नष्ट करो॥

स्तुवद्भ्यो भक्तिपूर्वं त्वां चण्डिके व्याधिनाशिनि ॥
रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥ १० ॥
चण्डिके सततं ये त्वामर्चयन्तीह भक्तितः ॥
रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥ ११ ॥

हे चण्डिके ! हे व्याधिनाशिनि ! भक्तिपूर्वक स्तुति करतेहुए अपने जनोंको रूप दो, जय दो, यश दो और उनके शत्रुवोंको नष्ट करो ॥ १० ॥ हे चण्डिके ! यहां पृथ्वीतलमें भक्तिसे निरंतर जो तुम्हारा पूजन करतेहैं उनको रूप दो, जय दो, यश दो और उनके शत्रुवोंको नष्ट करो ॥ ११ ॥

देहि सौभाग्यमारोग्यं देहि मे परमं सुखम् ॥
रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥ १२ ॥
विधेहि द्विषतां नाशं विधेहि बलमुच्चकैः ॥
रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥ १३ ॥
विधेहि देवि कल्याणं विधेहि परमां श्रियम् ॥
रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥ १४ ॥

हे देवि ! मुझको सौभाग्य दो, आरोग्य दो और परम सुख दो और रूप दो, जय दो, यश दो और मेरे शत्रुवोंको नष्ट करो ॥ १२ ॥ हे देवि ! शत्रुवोंका नाश करो और अधिक बल उत्पन्न करो और रूप दो, जय दो, यश दो और मेरे शत्रुवोंको नष्ट करो ॥ १३ ॥ हे देवि ! मेरा कल्याण करो और मेरे परम संपत्ति करो और मुझको रूप दो, जय दो, यश दो और मेरे शत्रुवोंको नष्ट करो॥ १४॥

सुरासुरशिरोरत्ननिघृष्टचरणेम्बिके ॥
रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥ १५ ॥
विद्यावन्तं यशस्वन्तं लक्ष्मीवन्तं जनं कुरु ॥
रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥ १६ ॥
प्रचण्डदैत्यदर्पघ्ने चण्डिके प्रणताय मे ॥
रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥ १७ ॥

हे सुरअसुरोंके मुकुटरत्नों करके घिसेहुए चरणोंवाली अर्थात् सुर असुरोंद्वारा मस्तकोंसे नमस्कारकरीहुई हे अंबिके! मुझको रूप दो, जय दो, यश दो और मेरे शत्रुवोंको नष्ट करो ॥ १५ ॥ और हे देवी! अपने जनको विद्यावाला करो, यशवाला करो और लक्ष्मीवाला करो और रूप दो, जय दो, यश दो और शत्रुवोंको नष्ट करो ॥ १६॥ हे प्रचंड

दैत्योंके अभिमानको नष्ट करनेवाली ! हे चण्डिके ! मुझ नम्र हुएको रूप दो, जय दो, यश दो और मेरे शत्रुवोंको नष्ट करो ॥ १७ ॥

चतुर्भुजे चतुर्वक्त्रसंस्तुते परमेश्वरी ॥
रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥ १८ ॥
कृष्णेन संस्तुते देवि शश्वद्भक्त्या सदाम्बिके ॥
रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥ १९ ॥
हिमाचलसुतानाथसंस्तुते परमेश्वरि ॥
रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥ २० ॥

हे चारभुजाओंवाली!हे ब्रह्मासे स्तुतकीहुई हे परमेश्वरि !मुझको रूप दो, जय दो, यश दो और मेरे शत्रुवोंको नष्ट करो ॥ १८ ॥ हे निरंतर भक्तिसे सदा कृष्णकी स्तुतकीहुई हे अंबिके ! रूप दो,जय दो, यश दो और मेरे शत्रुवोंको नष्ट करो ॥ १९ ॥ हे हिमाचलकी पुत्रीके नाथ ! अर्थात् शिवजीसे स्तुतकीहुई हे परमेश्वरि!मुझे रूप दो, जय दो; यश दो और मेरे शत्रुवोंको नष्ट करो ॥ २० ॥

इन्द्राणीपतिसद्भावपूजिते परमेश्वरि ॥
रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥ २१ ॥
देवि प्रचण्डदोर्दण्डदैत्यदर्पविनाशिनि ॥
रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥ २२ ॥
देवि भक्तजनोद्दामदत्तानन्दोदयेऽम्बिके ॥
रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥ २३ ॥

हे इंद्राणीके पति (इंद्र) के सद्भावसे पूजितकी हुई हे परमेश्वरि ! मुझे रूप दो, जय दो, यश दो और मेरे शत्रुवोंको नष्ट करो॥२१॥ हे देवि ! हे प्रचंड भुजदंडसे दैत्योंके गर्वको नष्ट करनेवाली ! मुझे

रूप दो, जय दो, यश दो और मेरे शत्रुवोंको नष्ट करो ॥ २२ ॥ हे देवि! हे भक्तजनोंके अत्यंत आनंदको उदय करनेवाली! हे अम्बिके ! मुझे रूप दो, जय दो, यश दो और मेरे शत्रुवोंको नष्ट करो॥२३॥

पत्नीं मनोरमां देहि मनोवृत्तानुसारिणीम् ॥
तारिणीं दुर्गसंसारसागरस्य कुलोद्भवाम् ॥ २४ ॥
इदं स्तोत्रं पठित्वा तु महास्तोत्रं पठेन्नरः ॥
स तु सप्तशती संख्यावरमाप्नोति सम्पदाम् ॥ २५ ॥
इतिमार्कण्डेयपुराणे अर्गलास्तोत्रं समाप्तम् ॥ २ ॥

और हे देवि ! हे सुंदरि ! मनके वृत्तांतके अनुसार चलनेवाली ! कठिन संसार सागरसे तारनेवाली श्रेष्ठ कुलमें उत्पन्न होनेवाली ऐसी स्त्री मुझे दो ॥ २४ ॥ जो मनुष्य प्रथम इस स्तोत्रका पाठ करके पश्चात् महास्तोत्र अर्थात् कीलकस्तोत्रका पाठ करताहै, वह चंडी-सप्तशती संख्याके समान सम्पत्तिरूप वरको प्राप्त होताहै ॥ २५ ॥

इति मार्कण्डेयपुराणान्तर्गतार्गलास्तोत्रभाषाटीका समाप्ता ॥

---

## अथ कीलकस्तोत्रम् ।

### मार्कण्डेय उवाच ।

विशुद्धज्ञानदेहाय त्रिवेदीदिव्यचक्षुषे ॥
श्रेयःप्राप्तिनिमित्ताय नमः सोमार्धधारिणे ॥ १ ॥
सर्वमेतद्विजानीयान्मन्त्राणामपि कीलकम् ॥
सोऽपि क्षेममवाप्नोति सततं जाप्यतत्परः ॥ २ ॥
सिद्ध्यन्त्युच्चाटनादीनि वस्तूनि सकलान्यपि ॥
एतेन स्तुवतां देवीं स्तोत्रमात्रेण सिद्ध्यति ॥ ३ ॥

मार्कण्डेय ऋषि कहने लगे। निर्मल ज्ञानरूप शरीरको धारण करनेवाले वेदत्रयीरूप तीननेत्रोंको धारण करनेवाले कल्याणकी प्राप्तिके कारण अर्ध चंद्रको धारण करनेवाले ऐसे शिवजीको नमस्कारहै ॥१॥ और जो पुरुष नवार्णमंत्रके जपमें तत्पर रहता है, वह भी कल्याणको प्राप्त होताहै ॥ २ ॥ और इसके उच्चाटन आदि संपूर्ण वस्तुए भी सिद्ध होजाती है इस कीलकस्तोत्र मात्र करके भी स्तुतिकी हुई देवी सिद्ध होजातीहै ॥ ३ ॥

न मन्त्रं नौषधं तंत्र न किंचिदपि विद्यते ॥
विना जाप्येन सिद्ध्येत सर्वमुच्चाटनादिकम् ॥ ४ ॥
समाग्राण्यपि सिद्ध्यन्ति लोकशंकामिमां हरः ॥
कृत्वा निमन्त्रयामास सर्वमेवमिदं शुभम् ॥ ५ ॥
स्तोत्रं वै चण्डिकायास्तु तच्च गुप्तं चकार सः ॥
समाप्नोति सुपुण्येन तां यथावन्नियन्त्रणाम् ॥ ६ ॥

न तो ऐसा कोई मंत्रहै न औषधहै न तंत्रहै कि जिसके जप किये विना संपूर्ण उच्चाटन आदि सिद्ध होजायँ ॥ ४ ॥ संपूर्ण ही वस्तुएँ सिद्ध हो जायँगी महादेवजी इस लोकशंकाको मानकर इस संपूर्णही शुभको अर्थात् मंत्र तंत्र आदिकोंको कीलदेते भये ॥ ५ ॥ इसी लिये वही महादेवजी चंडिकाके स्तोत्रकोभी गुप्त करते भये इसलिये चंडिकास्तोत्रकी यथावत् नियंत्रणाको अर्थात् उत्कीलनको जो मनुष्य अच्छे पुण्यकरके प्राप्त होजाताहै ॥ ६ ॥

सोऽपि क्षेममवाप्नोति सर्वमव न संशयः ॥
कृष्णायां वा चतुर्दश्यामष्टम्यां वा समाहितः ॥७॥
ददाति प्रतिगृह्णाति नान्यथैषा प्रसिद्ध्यति ॥

इत्थंरूपेण कीलेन महादेवेन कीलितम् ॥
योनिष्कीलां विधायैनां नित्यं जपति संस्फुटम् ॥
ससिद्धः सगणः सोऽपि गन्धर्वो जायते नरः ॥ ९ ॥
न चैवाप्यटतस्तस्य भयं क्वापि हि जायते ॥
नापमृत्युवशं याति मृतो मोक्षमवाप्नुयात् ॥ १० ॥

वह संपूर्ण क्षेम कल्याणको प्राप्त होताहै इसमें संदेह नहीं सावधान हुवा जो मनुष्य कृष्णपक्षकी चतुर्दशीको अथवा अष्टमीको ॥ ७ ॥ प्रथम देताहै फिर उससे लेताहै उसीसे यह दुर्गा प्रसिद्धि होतीहै अन्यथा नहीं होतीहै ऐसे कीलकसे यह स्तोत्र महादेवजीने कीलित कियाहै इसका अभिप्राय ऐसा जानना कि चतुर्दशी तथा अष्टमीको इसका पठन पाठन करनेसेही सिद्धि होतीहै अन्यथा नहीं ॥ ८ ॥ जो मनुष्य इस चंडीसप्तशतीको निष्कील करके इसको स्फुट नित्य जपताहै अर्थात् इसका नित्य पाठ करताहै वह सिद्ध होजाताहै और गणोंसहित गंधर्व योनिको प्राप्त होजाताहै ॥ ९ ॥ और विचरतेहुए उस पुरुषको कहींभी भय नहीं होताहै और न अपमृत्युके वशमें आताहै और यह मनुष्य मरके मोक्षको प्राप्त होताहै ॥ १० ॥

ज्ञात्वा प्रारभ्य कुर्वीत न कुर्वाणो विनश्यति ॥
ततो ज्ञात्वैव संपन्नमिदं प्रारभ्यते बुधैः ॥ ११ ॥
सौभाग्यादि च यत्किंचिद्दृश्यते ललनाजने ॥
तत्सर्वं त्वत्प्रसादेन तेन जाप्यमिदं शुभम् ॥ १२ ॥
शनैस्तु जाप्यमानेऽस्मिन्स्तोत्रे संपत्तिरुच्चकैः ॥
भवत्येव समग्रापि ततः प्रारभ्यमेव तत् ॥ १३ ॥
ऐश्वर्यं यत्प्रसादेन सौभाग्यारोग्यसंपदः ॥

शत्रुहानिः परो मोक्षः स्तूयते सा न किं जनैः ॥१४॥
इति भगवत्याः कीलकस्तोत्रं समाप्तम् ॥ ३ ॥

परंतु इसकी विधि अच्छी रीतिसे जानकरही इसके पाठका आरंभ करे और बिधि न जानकर पाठकरताहुवा नष्ट होजाताहै इसलिये पंडित जन इसको सांगोपांग जानकर पश्चात् पाठकरनेका आरंभ करें ॥११॥ हे देवि ! स्त्रीजनोंमें जो कुछ सौभाग्य आदि दीखपडताहै वह संपूर्ण आपकी कृपासेंहीहै इसलिये यह शुभ [ मंत्र ] जपना योग्यहै॥ ॥ १२ ॥ और जो मनुष्य इस स्तोत्रका शनैः २ स्पष्ट पाठ करताहै उसको संपूर्ण अतुल सम्पति प्राप्त होती है इसलिये इसका प्रारंभ करनाही उचितहै ॥१३ ॥ जिस भगवतीके प्रसादसे ऐश्वर्य, सौभाग्य आरोग्य और संपदाएँ प्राप्त होतीहैं तथा शत्रुवोंकी हानि और श्रेष्ठ मोक्षप्राप्ति होतीहै वह मनुष्योंने क्यों नहीं स्तुत करनी चाहिये अर्थात् अवश्यही स्तुत करनी चाहिये ॥ १४ ॥

इति भगवतीकीलकस्तोत्रभाषाटीकासमाप्ता ॥

---

## कात्यायनीतन्त्रोक्तप्रयोगः ।

॥ श्रीगणेशाय नमः ॥ ॥ अथप्रयोगान्तराणि कात्यायनीतन्त्रोक्तानि ॥ प्रतिश्लोकमाद्यन्तयोः प्रणवं जपेन्मन्त्रसिद्धिः ॥ १ ॥ अग्रे सर्वत्र श्लोकपदं मन्त्रोपलक्षणम् ॥ सप्रणवमनुलोमव्याहृतित्रयमादौ अन्ते तु विलोमं तदित्येवं प्रतिश्लोकं कृत्वा शतावृत्तपाठेऽतिशीघ्रं सिद्धिः ॥ २ ॥ प्रतिश्लोकमादौ जातवेदस इत्यृचं पठेत् सर्वकामसिद्धिः ॥ ३ ॥ अपमृत्युवारणाय त्र्यंबकमन्त्रं पठेत् ॥ आदावन्ते च शतमित्यर्थः प्रतिश्लोकं तन्मन्त्रजप इत्यन्यत्र ॥ ४ ॥ प्रतिश्लोकं शूलेनपाहिनोदेवीति पाठादपमृत्युनाशः ॥ अस्य केवलस्यापि श्लोकस्य लक्षमयुतं सहस्रं शतं वा जपे अपमृत्युवारणम् ॥ ५ ॥ प्रतिश्लोकं शरणागतदीनार्तेति श्लोकं पठेत्सर्वकार्यसिद्धिः ॥ ६ ॥ प्रतिश्लोकं करोतु सा नः शुभेत्यर्द्धं पठेत्सर्वकार्यसिद्धिः

॥ ७ ॥ स्वाभीष्टवरप्राप्तये एवं देव्या वरं लब्ध्वेति श्लोकं पठेत् ॥ ८ ॥ सर्वापत्ति-वारणाय प्रतिश्लोकं दुर्गेस्मृतेति पठेत् ॥ अस्य केवलस्यापि श्लोकस्य कार्यानुसारेण लक्षमयुतं सहस्रं शतं वा जपः ॥ ९ ॥ सर्वाबाधेत्यस्य लक्षजपे प्रतिश्लोकं पाठे वा श्लोकोक्तं फलम् ॥ १० ॥ इत्थं यदा यदाबाधेति श्लोकजपे महामारीशान्तिः ॥ ११ ॥ ततो वव्रे नृपो राज्यमिति मन्त्रस्य जपे पुनः स्वराज्यलाभः ॥ १२ ॥ हिनस्ति दैत्यतेजांसि इत्यनेन सदीपबलिदाने घण्टाबन्धने च बालग्रहशान्तिः ॥ १३ ॥ आद्यावृत्तिमनुलोमेन पठित्वा ततो विपरीतक्रमेण द्वितीयामनुलोमेन तृतीयामित्येव-मावृत्तित्रयेण शीघ्रं कार्यसिद्धिः ॥ १४ ॥ सर्वापत्तिवारणाय दुर्गे स्मृतेत्यर्द्धं ततोय-दन्ति यत्र दूरके इत्यृचं तदन्ते दारिद्र्यदुःखेत्यर्द्धम् । एवं कार्यानुसारेण लक्षमयुतं सहस्रं शतं वा जपः ॥ १५ ॥ कांसोस्मीत्यृचं प्रतिश्लोकं पठेल्लक्ष्मीप्राप्तिः ॥ १६ ॥ प्रतिश्लोकम् अनणा अस्मिन्नित्यृचं पठेदृणपरिहारः ॥ १७ ॥ मारणार्थमेवमुक्त्वा समुत्पत्येति श्लोकं प्रतिश्लोकं पठेत् मारणोक्तावृत्तिभिः फलसिद्धिः ॥ १८ ॥ ज्ञानिनामपि चेतांसि इति श्लोकजपमात्रेण सद्यो मोहनमित्यनुभवसिद्धम् ॥ प्रतिश्लोकं तच्छ्लोकपाठे त्ववश्यम् ॥ १९ ॥ रोगानशेषानिति श्लोकस्य प्रतिश्लोकं पाठे सकलरोग-नाशः ॥ तन्मात्रजपेऽपि सः ॥ २० ॥ इत्युक्ता सा तदा देवीगम्भीरेति श्लोकस्य प्रतिश्लोकं पाठे पृथग्जपे वा विद्या प्राप्तिर्वाग्वैकृतनाशश्च ॥ २१ ॥ भगवत्याकृतं सर्वमित्यादिद्वादशोत्तरशताक्षरोमन्त्रः सर्वकामदः सर्वापत्तिवारणश्च ॥ २२ ॥ देविप्रपन्नार्तिहरे इति श्लोकस्य यथाकार्यं लक्षायुतसहस्रशतान्यतमसं-ख्यजपे प्रतिश्लोकं पाठे वा सर्वापन्निवृत्तिः सर्वकामाप्तिश्च ॥ एषु प्रयोगेषु प्रति-श्लोकं दीपाग्रे केवलमेव नमस्करणेऽतिशीघ्रं सिद्धिः ॥ प्रतिश्लोकं कामबीज-संपुटितस्य एकचत्वारिंशद्दिनं त्रिरावृत्तौ सर्वकामसिद्धिः ॥ २३ ॥ एकविंशति दिनपर्यन्तमुक्तरीत्या प्रत्यहं द्वादशावृत्तौ वशीकरणम् ॥ २४ ॥ मायाबीजसंपुटि तस्य षट्पल्लवसहितस्य सप्तदीनपर्यन्तं त्रयोदशावृत्त्यामुच्चाटनसिद्धिः ॥ २५ ॥ तादृश्यामेव दिनचतुष्टयमेकादशावृत्तौ सर्वोपद्रवनाशः ॥ २६ ॥ एकोनपञ्चाश-द्दिनपर्यन्तं प्रतिश्लोकं श्रीबीजसंपुटितस्य पंचदशावृत्तौ लक्ष्मीप्राप्तिः ॥ २७ ॥ प्रतिश्लोकं वाग्बीजसंपुटितस्य शतावृत्त्या विद्याप्राप्तिः ॥ २८ ॥

# अथ शतचण्डीविधिः ।

॥ शंकरस्य भवान्या वा प्रासादनिकटे शुभम् ॥ मण्डपं कारयेत्प्राज्ञं

कुर्यात्सध्वजतोरणम् ॥ १ ॥ तत्र कुण्डं प्रकुर्वीत प्रतीच्यां मध्यतोऽपि वा ॥ स्नात्वा नित्यक्रियां कृत्वा वृणुयाद्दश वाडवान् ॥ २ ॥ जितेन्द्रियान्सदाचारान् कुलीनान्सत्यवादिनः ॥ वाडवा ब्राह्मणाः ॥ व्युत्पन्नांश्चण्डिकापाठरतान् लज्जा-दयावतः ॥ ३ ॥ मधुपर्कविधानेन स्वर्णवस्त्रादिदानतः ॥ जपार्थमासनं मालां दद्यात्तेभ्योऽपिभोजनम् ॥ ४ ॥ ते हविष्यान्नमश्नन्तो मन्त्रार्थगतमानसाः ॥ भूमौ शयानाः प्रत्येकं जपेयुश्चण्डिकास्तवम् ॥ ५ ॥ मार्कण्डेयपुराणोक्तं दशकृत्वः सचेतसः ॥ नवार्णं चण्डिकामन्त्रं जपेयुश्चायुतं पृथक् ॥ ६ ॥ पृथक्संपुटीक-रणादिति शेषः ॥ प्रत्येकं ब्राह्मणैरयुतजपः कार्यः ॥ अष्टमीनवमीचतुर्दशीपौर्ण-मासीषु यथा शतावृत्तिसमाप्तिर्भवति तथारम्भः कर्त्तव्य इति साम्प्रदायिकाः ॥ यज मानः पूजयेच्च कन्यानां नवकं शुभम् ॥ द्विवर्षाया दशाब्दान्ताः कुमारीः परिपू-जयेत् ॥ १ ॥ तासां क्रमेण नामानि ॥ कुमारी ॥ १ ॥ त्रिमूर्तिः ॥ २ ॥ कल्याणी ॥ ३ ॥ रोहिणी ॥ ४ ॥ कालिका ॥ ५ ॥ शांभवी ॥ ६ ॥ दुर्गा ॥ ॥ ७ ॥ चण्डिका ॥ ८ ॥ सुभद्रा ॥ ९ ॥ इति । नाममन्त्रैस्तासांपूजा ॥ तत्र हीनाधिकाङ्गी कुष्ठव्रणयुता अन्धा काणा कुरूपा केकरा कुब्जी लोमयुग्देहा दासीजा रोहिणीत्येवमाद्या वर्ज्याः ॥ विप्रां सर्वेष्टसंसिद्ध्यै यशसे क्षत्रियोद्भवाम् ॥ वैश्यजां धनलाभाय पुत्राप्त्यै शूद्रजां यजेत् ॥ गन्धपुष्पधूपदीपभक्ष्यभोज्यैर्यथा-शक्ति वस्त्राभरणैश्च पूजयेत् ॥ द्विवर्षा सा कुमार्युक्ता त्रिमूर्तिर्हायनात्रिका ॥ चतु-रब्दा तु कल्याणी पंचवर्षा तु रोहिणी ॥२॥ षडब्दा कालिका प्रोक्ता चचण्डिका सप्तहायना ॥ अष्टवर्षा शांभवी स्याद्दुर्गा तु नवहायना ॥ सुभद्रा ॥ दशवर्षोक्ता नाममन्त्रैः प्रपूजयेत् ॥ तासामावाहने मन्त्रः प्रोच्यते शंकरोदितः ॥ मन्त्राक्षर-मयीं लक्ष्मीं मातृणां रूपधारिणीम् ॥ नवदुर्गात्मिकां साक्षात्कन्यामावाहयाम्यहम् ॥ कुमारिकादिकन्यानां पूजामन्त्रान्ब्रुवेऽधुना ॥ जगत्पूज्ये जगद्वन्द्ये सर्वशक्तिस्वरू-पिणि ॥ पूजां गृहाण कौमारि जगन्मातर्नमोऽस्तुते ॥ त्रिपुरां त्रिपुराधारां त्रिवर्षां ज्ञानरूपिणीम् ॥ त्रैलोक्यवन्दितां देवीं त्रिमूर्तिं पूजयाम्यहम् ॥ कला-त्मिकां कलातीतां कारुण्यहृदयां शिवाम् ॥ कल्याणजननीं देवीं कल्याणीं पूजयाम्यहम् ॥ अणिमादिगुणाधारामकाराद्यक्षरात्मिकाम् ॥ अनन्तशक्तिकां लक्ष्मीं रोहिणीं पूजयाम्यहम् ॥ कामचारीं शुभां कान्तां कालचक्रस्वरूपिणीम् ॥ कामदां करुणोदारां कालिकां पूजयाम्यहम् ॥ चण्डवीरां चण्डमायां चण्डमुण्ड-प्रभञ्जनीम् ॥ पूजयामि सदा देवीं चण्डिकां चण्डविक्रमाम् ॥ सदानंदकरीं

शान्तां सर्वदेवनमस्कृताम् ॥ सर्वभूतात्मिकां लक्ष्मीं शाम्भवीं पूजयाम्यहम् ॥ दुर्गमे दुस्तरे कार्ये भवदुःखविनाशिनीम् ॥ पूजयामि सदा भक्त्या दुर्गां दुर्गार्तिनाशिनीम् ॥ सुंदरीं स्वर्णवर्णाभां सुखसौभाग्यदायिनीम् ॥ सुभद्रजननीं देवीं सुभद्रां पूजयाम्यहम् ॥ एतैर्मन्त्रैः पुराणोक्तैस्तां तां कन्यां समर्चयेत् ॥ इति पूजनं कुमारिकाणाम् ॥ वेद्यां विरचिते रम्ये सर्वतोभद्रमण्डले ॥ घटं संस्थाप्य विधिना तत्रावाह्यार्चयेच्छिवाम् ॥ तदग्रे कन्यकाश्चाऽपि पूजयेद्ब्राह्मणानपि ॥ उपचारैस्तु विविधैर्नवार्णावरणान्यपि ॥ ॐ कारः प्रथमं पीठं पूर्णपीठमतः परम् ॥ तृतीयं कामपीठं च पूजयेत्सम्प्रदायतः पूर्वादिदिक्षुपीठस्य गणेशादिचतुष्टयम् ॥ गणेशक्षेत्रपालौ च पादुके बटुकास्त्रयः ॥ आग्नेय्यादिचतुर्दिक्षु पूज्यं देवीचतुष्टयम् ॥ जया च विजया चैव जयन्ती चापराजिता ॥ पूर्वोक्तयन्त्रे पूर्वकोणे सरस्वतीसहितो ब्रह्मा श्रीसहितो विष्णुर्नैर्ऋत्यामुमया शिवो वायव्यां षट्कोणे चक्रमध्यमध्यबीजे श्रीमहालक्ष्मीः ॥ ह्रीं महाकाली ऐं महासरस्वती दक्षिणवामयोः ॥ उदक्सिंहो दक्षिणे महिषः ॥ षट्कोणेषु नन्दजारक्तदन्तिकाशाकंभरीदुर्गाभीमाभ्रामर्य्यः ॥ सबिन्दुनामाद्यवर्णताराद्याश्चासां नाममन्त्राः पूजादौ ॥ तारः प्रणवः अष्टत्रयेषु ब्रह्माणीमाहेश्वरीकौमारीवैष्णवीवाराहीनारसिंहीऐन्द्रीचामुंडाख्याः शत्या नाममन्त्रैः पूज्याः ॥ ततोविष्णुमायादिचतुर्विंशतिदेवताः प्रागादिक्रमेण केसरेषु पूज्याः ॥ प्रतिपत्रं च केसरत्रयम् ॥ ताश्च ॥ विष्णुमाया १ चेतना २ बुद्धि ३ निद्रा ४ क्षुधा ५ छाया ६ शक्ति ७ तृष्णा ८ क्षान्ति ९ जाति १० लज्जा ११ शान्ति १२ श्रद्धा १३ कान्ति १४ लक्ष्मी १५ धृति १६ ॥ वृत्ति १७ स्मृति १८ दया १९ तुष्टि २० पुष्टि २१ मातृ २२ भ्रांति २३ चिति २४ रूपा एतावत्यः ॥ सप्तशतीस्तवे पञ्चमाध्याये आसां चतुर्विंशतीनां न पाठ इति न भ्रमितव्यम् ॥ कात्यायनीतन्त्रविरोधात् ॥ नालमूले तु संपूज्य माधवादिचतुष्टयम् ॥ आधारः कूर्मशेषौ च चतुर्थी पृथिवी नृप ॥ गृहकोणेषु गणेशः क्षेत्रपालो बटुको योगिन्यः ॥ प्रागादिदिक्षु इन्द्राद्याश्चेति । एवं चतुर्दिनं कुर्यात् ॥ तत्र प्रथमेहि एकावृत्तिर्द्वितीये द्वे तृतीये तिस्रश्चतुर्थे चतस्र इति ॥ पञ्चमे होमः ॥ होमद्रव्याणि ॥ पायसान्नैस्त्रिमध्वक्तैर्द्राक्षारम्भाफलादिभिः ॥ मातुलिङ्गैरिक्षुखण्डैर्नालिकेरयुतैस्तिलैः ॥ जातीफलैराम्रफलैरन्यैर्मधुरवस्तुभिरिति ॥ सप्तशत्या दशावृत्त्या प्रतिमन्त्रं हुतं चरेत् ॥ अयुतं च नवार्णेन स्थापितेऽग्नौ विधानतः । कृत्वावरणदेवानां होमं तन्नाममन्त्रतः ॥ कृत्वा पूर्णाहुतिं सम्यग्देवमग्निं विसृज्य च ॥ अभिषिञ्चेच्च

पञ्चारं विशोधः कलशोदकैः ॥ निष्कं सुवर्णमथवा प्रत्येकं दक्षिणां दिशेत् ॥ भोजयेच्च शतं विप्रान् भक्ष्यभोज्यैः पृथग्विधैः ॥ तेभ्योऽपि दक्षिणां दत्त्वा गृह्णीयादाशिषस्तथा ॥ एवं कृते जगद्वश्यं सर्वे नश्यन्त्युपद्रवाः ॥ इति शतचण्डीविधिः ॥

## ॥ नवार्णमंत्रजपविधिः ॥

॥ ॐ अस्य श्रीनवार्णमन्त्रस्य ॥ ब्रह्माविष्णुरुद्रा ऋषयः ॥ गायत्र्युष्णिगनुष्टुप छन्दांसि ॥ श्रीमहाकालीमहालक्ष्मीमहासरस्वत्यो देवताः ॥ ऐं बीजम् ॥ ह्रीं शक्तिः ॥ क्लीं कीलकम् ॥ श्रीमहाकालीमहालक्ष्मीमहासरस्वतीप्रीत्यर्थं जपे विनियोगः ॥ ब्रह्माविष्णुरुद्रऋषिभ्यो नमः शिरसि ॥ गायत्र्युष्णिगनुष्टुप्छन्दोभ्यो नमः मुखे ॥ महाकालीमहालक्ष्मीमहासरस्वतीदेवताभ्यो नमः हृदि ॥ ऐं बीजाय नमः गुह्ये ॥ ह्रीं शक्तये नमः पादयोः ॥ क्लीं कीलकाय नमः नाभौ ॥ इति मूलेन करौ संशोध्य ॥ ॐ ऐं अंगुष्ठाभ्यां नमः ॥ ॐ ह्रीं तर्जनीभ्यां नमः ॥ ॐ क्लीं मध्यमाभ्यां नमः ॥ ॐ चामुण्डायै अनामिकाभ्यां नमः ॥ ॐ विच्चे कनिष्ठिकाभ्यां नमः ॥ ऐं ह्रीं क्लीं चामुण्डायै विच्चे करतलकरपृष्ठाभ्यां नमः एवं हृदयादि ॥ ततोऽक्षरन्यासः ॥ ॐ ऐं नमः शिखायाम् ॥ ॐ ह्रीं नमः दक्षिणनेत्रे ॥ ॐ क्लीं नमः वामनेत्रे ॥ ॐ चां नमः दक्षिणकर्णे ॥ ॐ मुं नमः वामकर्णे ॥ ॐ डां नमः दक्षिणनासायाम् ॥ ॐ यैं नमः वामनासायाम् ॥ ॐ विं नमः मुखे ॐ च्चें नमः गुह्ये ॥ एवं विन्यस्याष्टवारं मूलेन व्यापकं कुर्यात् ॥ ॐ ऐं प्राच्यै नमः ॥ ॐ ऐं आग्नेय्यै नमः ॥ ॐ ह्रीं दक्षिणायै नमः ॐ ह्रीं नैर्ऋत्यै नमः ॥ ॐ क्लीं प्रतीच्यै नमः ॥ ॐ क्लीं वायव्यै नमः ॥ ॐ चामुण्डायै उदीच्यै नमः ॥ ॐ विच्चे ईशान्यै नमः ॥ ॐ ऐं ह्रीं क्लीं चामुण्डायै विच्चे ऊर्ध्वायै नमः ॥ ॐ ऐं ह्रीं क्लीं चामुण्डायै विच्चे भूम्यै नमः ॥ अथ ध्यानम् ॥ खड्गं चक्रगदेषुचापपरिघान् शूलं भुशुण्डीं शिरः शंखं संदधतीं करैस्त्रिनयनां सर्वाङ्गभूषावृताम् ॥ नीलाश्मद्युतिमास्यपाददशकां सेवे महाकालिकां यामस्तौत्स्वपिते हरौ कमलजो हन्तुं मधुं कैटभम् ॥ १ ॥ अक्षस्रक्परशुं गदेषुकुलिशं पद्मं धनुः कुण्डिकां दण्डं शक्तिमसिं च चर्म जलजं घण्टां सुराभाजनम् ॥ शूलं पाशसुदर्शने च दधतीं हस्तैः प्रसन्नाननां सेवे सैरिभमर्दिनीमिह महालक्ष्मीं सरोजस्थिताम् ॥ २ ॥ घण्टाशूलहलानि शङ्खमुसले चक्रं धनुः सायकं हस्ताब्जैर्दधतीं घनान्तविलसच्छीतांशुतुल्यप्रभाम् ॥ गौरीदेहसमुद्भवां त्रिजगतामाधारभूतां महापूर्वामत्र सरस्वतीमनुभजे

क्षुम्भादिदैत्यार्दिनीम् ॥ ३ ॥ अष्टोत्तरशतसंख्यया मन्त्रराजं जपेत् ॥ इति नवार्णविधिः ॥

## अथ रात्रिसूक्तम् ॥

तत्रादौ ऋग्वेदोक्तं रात्रीसूक्तं यथा ॥ ॐ रात्रिर्व्यख्यदायतीपुरुत्रादेव्य १ क्षभिः ॥ विश्वाअधिश्रियोधित ॥ ओर्वप्राअमर्त्यानिवतोदेव्यु १ द्वतः ॥ ज्योतिषाबाधतेतमः ॥ निरुस्वसारमस्कृतोषसंदेव्यायती ॥ अपेदुहासतेतमः ॥ सानोअद्ययस्यावयंनितेयामन्नविक्ष्महि ॥ वृक्षेनवसतिंवयः ॥ निग्रामासोअविक्षतनिपद्वंतोनिपक्षिणः ॥ निश्येनासश्चिदर्थिनः यावयावृक्यं १ वृकंयवयस्तेनमूर्म्ये ॥ अथानः सुतराभव ॥ उपमापेपिशत्तमःकृष्णंव्यक्तमस्थित ॥ उषऋणेवयातय ॥ उपतेगाइवाकरंवृणीष्वदुहितर्दिवः ॥ रात्रिस्तोमंनजिग्युषे ॥ इति ऋग्वेदोक्तं रात्रिसूक्तं समाप्तम् ॥

## ॥ अथ तंत्रोक्तं रात्रिसूक्तम् ॥

विश्वेश्वरीं जगद्धात्रीं स्थितिसंहारकारिणीम् ॥ निद्रां भगवतीं विष्णोरतुलां तेजसः प्रभुः ॥१॥ ब्रह्मोवाच ॥ त्वं स्वाहा त्वं स्वधा त्वं हि वषट्कारः स्वरात्मिका ॥ सुधा त्वमक्षरे नित्ये त्रिधा मात्रात्मिका स्थिता ॥ २ ॥ अर्धमात्रा स्थिता नित्या यानुच्चार्या विशेषतः ॥ त्वमेव संध्या सावित्री त्वं देवि जननी परा ॥ ३ ॥ त्वयैतद्धार्यते विश्वं त्वयैतत्सृज्यते जगत् ॥ त्वयैतत्पाल्यते देवि त्वमत्स्यन्ते च सर्वदा ॥ ॥ ४ ॥ विसृष्टौ सृष्टिरूपा त्वं स्थितिरूपा च पालने ॥ तथा संहृतिरूपान्ते जगतोऽस्य जगन्मये ॥ ५ ॥ महाविद्या महामाया महामेधा महास्मृतिः ॥ महामोहा च भगवती महादेवि महासुरी ॥ ६ ॥ प्रकृतिस्त्वं च सर्वस्य गुणत्रयविभाविनी ॥ कालरात्रिमहारात्रिर्मोहरात्रिश्च दारुणा ॥ ७ ॥ त्वं श्रीस्त्वमीश्वरी त्वं ह्रीस्त्वं बुद्धिर्बोधलक्षणा ॥ लज्जा पुष्टिस्तथा तुष्टिस्त्वं शान्तिः क्षान्तिरेव च ॥ ॥ ८ ॥ खड्गिनी शूलिनी घोरा गदिनी चक्रिणी तथा ॥ शङ्खिनी चापिनी

बाणभुशुण्डीपरिघायुधा ॥ ९ ॥ सौम्या सौम्यतराशेषसौम्येभ्यस्त्वतिसुन्दरी ॥ परापराणां परमा त्वमेव परमेश्वरी ॥ १० ॥ यच्चकिंचित्क्वचिद्वस्तु सदसद्वाऽखिलात्मिके ॥ तस्य सर्वस्य या शक्तिः सा त्वं किं स्तूयसे तदा ॥ ११ ॥ यया त्वया जगत्स्रष्टा जगत्पात्यत्ति यो जगत् ॥ सोऽपि निद्रावशं नीतः कस्त्वां स्तोतुमिहेश्वरः ॥ १२ ॥ विष्णुश्शरीरग्रहणमहमीशान एव च ॥ कारितास्तेयतोऽतस्त्वां कः स्तोतुं शक्तिमान्भवेत् ॥ १३ ॥ सा त्वमित्थं प्रभावैः स्वैरुदारैर्देवि संस्तुता॥ मोहयैतौ दुराधर्षावसुरौ मधुकैटभौ ॥ १४ ॥ प्रबोधं च जगत्स्वामी नीयतामच्युतो लघु ॥ बोधश्च क्रियतामस्य हन्तुमेतौ महासुरौ ॥ १५ ॥ इति० ॥

# ॥ अथ सप्तशतीन्यासः ॥

अथ प्रथममध्यमोत्तमचरित्राणां ब्रह्मविष्णुरुद्रा ऋषयः ॥ श्रीमहाकालीमहालक्ष्मीमहासरस्वत्यो देवताः ॥ गायत्र्युष्णिगनुष्टुप्छन्दांसि ॥ नन्दाशाकंभरीभीमाः शक्तयः ॥ रक्तदन्तिकादुर्गाभ्रामर्यो बीजानि ॥ अग्निर्वायुः सूर्यस्तत्त्वानि ॥ ऋग्यजुःसामवेदा ध्यानानि ॥ सकलकामनासिद्धये श्रीमहाकालीमहालक्ष्मीमहासरस्वतीदेवताप्रीत्यर्थं जपे विनियोगः ॥ तत्रादौ न्यासाः ॥ खड्गिनी शूलिनी घोरा गदिनी चक्रिणी तथा ॥ शंखिनी चापिनी बाणभुशुण्डीपरिघायुधा ॥ अंगुष्ठाभ्यां नमः ॥ शूलेन पाहिनो देवि पाहि खड्गेन चाम्बिके ॥ घण्टास्वनेन नः पाहि चापज्यानिःस्वनेन च ॥ तर्जनीभ्यां नमः ॥ प्राच्यां रक्ष प्रतीच्यां च चण्डिके रक्ष दक्षिणे ॥ भ्रामणेनात्मशूलस्य उत्तरस्यां तथेश्वरि ॥ मध्यमाभ्यां नमः ॥ सौम्यानि यानि रूपाणि त्रैलोक्ये विचरन्ति ते ॥ यानि चात्यर्थघोराणि तैरक्षास्मांस्तथा भुवम् ॥ अनामिकाभ्यां नमः ॥ खड्गशूलगदादीनि यानि चास्त्राणि तेऽम्बिके ॥ करपल्लवसङ्गीनि तैरस्मान् रक्ष सर्वतः ॥ कनिष्ठिकाभ्यां नमः॥सर्वस्वरूपे सर्वेशे सर्वशक्तिसमन्विते ॥ भयेभ्यस्त्राहि नो देवि दुर्गे देवि नमोस्तुते ॥ करतलकरपृष्ठाभ्यां नमः ॥ एवं हृदयादि ॥ खड्गिनी शूलिनी घोरा० हृदयाय नमः ॥ शूलेन पाहि नो देवि० शिरसे स्वाहा ॥ प्राच्यां रक्ष प्रतीच्यां च० शिखायै वषट् ॥ सौम्यानि यानि रूपाणि० कवचाय हुम् ॥ खड्गशूलगदादीनि० नेत्रत्रयाय वौषट् ॥ सर्वस्वरूपे सर्वेशे० अस्त्राय फट् ॥ इति न्यासः ॥ ॥ ॥

---

॥ श्रीः ॥

# सप्तशती ।

## भाषार्थानुवादसमलंकृता ।

अथ प्रथम अध्यायः ।

दुर्गां देवीं नमस्कृत्य दुर्गापाठेऽतिदुर्गमे ॥
तद्वाचि विशदार्थाख्यां कुर्वे टीकां मनोहराम् ॥ १ ॥
दुर्गं यथाऽधिरोहंति दुर्गापाठं सुदुर्गमम् ॥
साधारणा अपि जना विशदार्थां सृतिं गताः ॥ २ ॥

अस्य श्रीप्रथमचरित्रस्य, ब्रह्मा ऋषिः ॥ महाकाली देवता ॥ गायत्री छन्दः ॥ नन्दा शक्तिः ॥ रक्तदन्तिका बीजम् ॥ अग्निस्तत्त्वम् ॥ ऋग्वेदः स्वरूपम् ॥ श्रीमहाकालीप्रीत्यर्थं प्रथमचरित्रजपे विनियोगः ॥ खड्गं चक्रगदेषुचापपरिघान् शूलं भुशुण्डीं शिरः शंखं संदधतीं करैस्त्रिनयनां सर्वाङ्गभूषावृताम् ॥ नीलाश्मद्युतिमास्यपाददशकां सेवे महाकालिकां यामस्तौत्स्वपिते हरौ कमलजो हन्तुं मधुं कैटभम् ॥

इस श्रीप्रथमचरित्रका ब्रह्मा ऋषि है, महाकाली देवता है, गायत्री छन्द है, नन्दा शक्ति है, रक्तदन्तिका बीज है, अग्नि तत्व है, और ऋग्वेदकी मूर्ति है। श्रीमहाकालीकी प्रीतिके लिये इसका प्रथमचरित्रके पाठमें विनियोग है ॥ खड्ग, चक्र, गदा, बाण, धनुष, परिघ, शूल, भुशुण्डी, शिर और शंख अपनी दश भुजाओंसे इन शस्त्र अस्त्र

आदिकोंको धारण किये, तीन नेत्रोंको धारण किये, संपूर्ण अंगके आभूषणोंको धारण किये, नीलमणिकी कांतिको धारण किये, और योगनिद्रामें हरि भगवान्के सोतेहुए मधुकैटभ दैत्योंके मारनेको ब्रह्मा जिसकी स्तुति करते भये ऐसी महाकालीका मैं भजन करताहूं ॥

मार्कण्डेय उवाच ॥ १ ॥

सावर्णिः सूर्यतनयो यो मनुः कथ्यतेऽष्टमः ॥
निशामय तदुत्पत्तिं विस्तराद्गदतो मम॥ २ ॥
महामायानुभावेन यथा मन्वंतराधिपः ॥
स बभूव महाभागः सावर्णिस्तनयो रवेः ॥ ३ ॥

मार्कंडेय ऋषि कहने लगे ॥ १ ॥ सूर्यका पुत्र सावर्णि नाम जो आठवाँ मनु कहाता है उसकी उत्पत्ति विस्तारसे कहते हुएसे मुझसे सुनो ॥ २ ॥ जैसे कि वह सूर्यका पुत्र महाभाग सावर्णि महामायाके प्रसादसे मन्वंतरका अधिपति ( स्वामी ) होता भया ॥ ३ ॥

स्वारोचिषेऽन्तरे पूर्वं चैत्रवंशसमुद्भवः ॥
सुरथो नाम राजाऽभूत्समस्ते क्षितिमण्डले ॥ ४ ॥
तस्य पालयतः सम्यक् प्रजाः पुत्रानिवौरसान् ॥
बभूवुः शत्रवो भूपाः कोलाविध्वंसिनस्तदा ॥ ५ ॥
तस्य तैरभवद्युद्धमतिप्रबलदण्डिनः ॥
न्यूनैरपि स तैर्युद्धे कोलाविध्वंसिभिर्जितः ॥ ६ ॥

पहले स्वारोचिष नाम मन्वन्तरमें चैत्रवंशमें होनेवाला संपूर्ण पृथ्वीमंडलका राजा सुरथ नाम हुवा ॥ ४ ॥ उस कालमें अपने पुत्रोंके समान अच्छी तरह प्रजाका पालन करतेहुए उस राजाके कोलाविध्वंसी नाश शत्रु उत्पन्न होते भये ॥ ५ ॥ पश्चात् अत्यंत प्रबल दंड

देनेवाले उस सुरथ राजाके साथ उनका युद्ध हुवा. फिर राजाकी से-
नासे थोड़ेभी इन कोलाविध्वंसियोंने वह राजा जीत लिया ॥ ६ ॥

ततः स्वपुरमायातो निजदेशाधिपोऽभवत् ॥
आक्रान्तः स महाभागस्तैस्तदा प्रबलारिभिः॥७॥
अमात्यैर्बलिभिर्दुष्टैर्दुर्बलस्य दुरात्मभिः ॥
कोशो बलं चापहृतं तत्रापि स्वपुरे ततः ॥ ८ ॥
ततो मृगयाव्याजेन हृतस्वाम्यः स भूपतिः ॥
एकाकी हयमारुह्य जगाम गहनं वनम् ॥ ९ ॥

फिर यह सुरथ राजा अपने पुरमें आकर अपने देशका राज्य
करने लगा तब प्रबल शत्रुवोंने यहमहाभाग सुरथ राजाको दबालिया
॥ ७ ॥ और तहां पुरमेंभी उस राजाका खजाना और सेना खोटे
अंतःकरणवाले दुष्ट बली मंत्रियोंने हरलिया ॥८॥ इसके अनंतर जब
इस राजाका राज्याधिकार हरागया, तब अकेला घोड़ापर सवार
होकर शिकारके मिससे गहन वनको चलागया ॥ ९ ॥

स तत्राश्रममद्राक्षीद्द्विजवर्यस्य मेधसः ॥
प्रशान्तश्वापदाकीर्णं मुनिशिष्योपशोभितम्॥१०॥
तस्थौ कंचित्स कालं च मुनिना तेन सत्कृतः ॥
इतश्चेतश्च विचरंस्तस्मिन्मुनिवराश्रमे ॥ ११ ॥
सोऽचिन्तयत्तदा तत्र ममत्वाकृष्टचेतनः ॥
मत्पूर्वैः पालितं पूर्वं मया हीनं पुरं हि तत् ॥ १२ ॥

वहां वनमें उस राजाने मेधा नाम महर्षिका शांतचित्तवाले सिंह,
मृग आदिकोंसे व्याप्त,मुनिशिष्योंसे शोभित ऐसा आश्रम देखा॥१०॥

मेधामुनिने करके सत्कार कियाहुआ यह राजा प्रथम तो कुछेक काल वहां स्थित रहा. फिर उस मुनिके श्रेष्ठ आश्रममें विचरताहुवा वह राजा ममताने खैंची है बुद्धि जिसकी ऐसा होकर वहां उस कालमें शोचने लगा कि देखो जिस पुरकी मेरे पूर्वजोंने (पुरुषाओंने) रक्षा की थी वह पुर अब मुझसे छूट गया ॥ ११ ॥ १२ ॥

मद्भृत्यैस्तैरसद्वृत्तैर्धर्मतः पाल्यते न वा ॥
न जाने स प्रधानो मे शूरहस्ती सदामदः ॥ १३ ॥
मम वैरिवशं यातः कान्भोगानुपलप्स्यते ॥
ये ममानुगता नित्यं प्रसादधनभोजनैः ॥ १४ ॥
अनुवृत्तिं ध्रुवं तेऽद्य कुर्वन्त्यन्यमहीभृताम् ॥
असम्यग्व्ययशीलैस्तैः कुर्वद्भिः सततं व्ययम् ॥ १५
सचितः सोऽतिदुःखेन क्षयं कोशो गमिष्यति ॥
एतच्चान्यच्च सततं चिन्तयामास पार्थिवः ॥ १६ ॥

मैं नहीं जानता वे दुराचारी मेरे नौकर उस पुरकी धर्मसे पालना करते होंगे कि नहीं ? यह मैं नहीं जानताहूं और सदा मदोन्मत्त रहनेवाला प्रधान मेरा शूर हस्ती मेरे शत्रुवोंके वशहुआ किन भोगोंको भोगता होगा यहभी मैं नहीं जानता हूं और जो मेरे भृत्य प्रसाद धन और भोजन आदिको करके पालेहुए नित्य मेरे आज्ञाकारी रहते थे॥१३॥१४॥ वे निश्चित अब अन्य राजाओंके आश्रित होरहे हैं और खोटे मार्गमें खरच करनेके स्वभाववाले उन मंत्रियोंके निरंतर खरच करतेहुए अत्यंत दुःखसे संचित किया मेरा खजाना नष्ट होजायगा. ऐसी और अन्य प्रकारकी निरंतर चिंताएँ वह राजा निरंतर करता भया ॥ १५ ॥ १६ ॥

तत्र विप्राश्रमाभ्याशे वैश्यमेकं ददर्श सः ॥
स पृष्टस्तेन कस्त्वं भो हेतुश्चागमनेऽत्र कः ॥ १७ ॥
सशोक इव कस्मात्त्वं दुर्मना इव लक्ष्यसे ॥
इत्याकर्ण्य वचस्तस्य भूपतेः प्रणयोदितम् ॥१८॥
प्रत्युवाच स तं वैश्यः प्रश्रयावनतो नृपम् ॥१९॥

पश्चात् तहां महर्षिके आश्रमके समीपही वह राजा एक वैश्यको देखताभया । फिर उस वैश्यसे राजाने पूछा कि तुम कौन हो और तुम्हारा यहां आनेका क्या कारण है अर्थात् यहां किस प्रयोजनको आये हो॥१७॥ और शोकयुक्तकी तरह दुर्मनाकी तरह तू कैसे दीख पड़ता है. ऐसा नम्रतापूर्वक कहाहुवा सुरथ राजाका वचन सुनकर॥१८॥ विनयसे नम्रहुये उस वैश्यने राजाके प्रति यह उत्तर किया ॥१९॥

वैश्य उवाच ॥ २० ॥

समाधिर्नाम वैश्योऽहमुत्पन्नो धनिनां कुले ॥२१॥

वैश्य कहने लगा ॥ २० ॥ हे राजन्! धनियोंके कुलमें उत्पन्न होनेवाला समाधि नामसे प्रसिद्ध मैं वैश्य हूं ॥ २१ ॥

पुत्रदारैर्निरस्तश्च धनलोभादसाधुभिः ॥
विहीनश्च धनैर्दारैः पुत्रैरादाय मे धनम् ॥ २२ ॥
वनमभ्यागतो दुःखी निरस्तश्चाप्तबन्धुभिः ॥
सोऽहं न वेद्मि पुत्राणां कुशलाकुशलात्मिकाम् ॥२३॥
प्रवृत्तिं स्वजनानां च दाराणां चात्र संस्थितः ॥
किं नु तेषां गृहे क्षेममक्षेमं किं नु सांप्रतम् ॥ २४ ॥

और धनके लोभी मेरे खोटे स्त्रीपुत्रोंने मेरा संपूर्ण धन छीनकर मेरेको बाहर निकालदिया. फिर बंधुजनोंकाभी त्यागाहुवा मैं दु-

खित होकर वनमें आगया सो ऐसा मैं यहां वनमें स्थितहुवा अपने पुत्र स्वजन और स्त्री इनकी कुशल अकुशलकी वार्ता नहीं जानता हूं।कि अब घरमें उनके कुशल है या अकुशल है ॥ २२ ॥ २३ ॥ २४ ॥

कथं ते किं नु सद्वृत्ता दुर्वृत्ताः किं नु मे सुताः ॥ २५ ॥

राजोवाच ॥ २६ ॥

यैर्निरस्तो भवाँल्लुब्धैः पुत्रदारादिभिर्धनैः ॥ २७ ॥

मैं नहीं जानताहूं कि मेरे पुत्रोंका वृत्तांत कैसा है।अच्छा है या बुरा है ॥ २५ ॥ राजा कहने लगा ॥ २६ ॥ जिन लोभी पुत्र स्त्री आदिकोंने धनके लोभसे तुमको निकाल दिये ॥ २७ ॥

तेषु किं भवतः स्नेहमनुबध्नाति मानसम् ॥ २८ ॥

वैश्य उवाच ॥ २९ ॥

एवमेतद्यथा प्राह भवानस्मद्गतं वचः ॥ ३० ॥

अब उनमें तुह्मारा चित्त किसलिये स्नेह करता है ॥२८॥वैश्य कहने लगा॥२९॥मेरे विषयमें जैसा आप वचन कहते हैं सो ऐसाही है इसमें संदेह नहीं ॥ ३० ॥

किं करोमि न बध्नाति मम निष्ठुरता मनः ॥
यैः सन्त्यज्य पितृस्नेहं धनलुब्धैर्निराकृतः ॥ ३१ ॥
पतिस्वजनहार्दं च हार्दितेष्वेव मे मनः ॥
किमेतन्नाभिजानामि जानन्नपि महामते ॥ ३२ ॥
यत्प्रेमप्रवणं चित्तं विगुणेष्वपि बन्धुषु ॥
तेषां कृते मे निःश्वासो दौर्मनस्यं च जायते ॥३३॥

परंतु क्या करूं! मेरा मन कठोरता नहीं पकडता है-जिस धनके लोभी पुत्रोंने तो पिताका स्नेह त्यागकर मुझे निकालदिया और

स्त्री स्वजन बांधवोंने पति आदिका स्नेह त्यागकर मुझको निकालदिया है. हे महामते ! मेरा हार्दि ( मन ) फिरभी उनमेंही जाता है,इसका क्या कारण है मैं जानताहुवाभी नहीं जानताहूं॥३१॥३२॥ जो प्रेमसे नम्रहुवा चित्त अवगुणी बंधुवोंमेंभी जाता है इसलिये उनके अर्थ मेरा निःश्वास और चित्त खिन्न ( दुःखी ) होता है॥३३॥

करोमि किं यन्न मनस्तेष्वप्रीतिषु निष्ठुरम् ॥ ३४ ॥

मार्कण्डेय उवाच ॥ ३५ ॥

ततस्तौ सहितौ विप्र तं मुनिं समुपस्थितौ ॥ ३६ ॥
समाधिर्नाम वैश्योऽसौ स च पार्थिवसत्तमः ॥
कृत्वा तु तौ यथान्यायं यथार्हं तेन संविदम्॥३७॥

करूं क्या ?जिससे अप्रीतिवालोंमेंभी उनमें मेरा चित्त कठोरता नहीं पकडता है ॥ ३४ ॥ मार्कंडेय ऋषि कहने लगे ॥३५॥ हे विप्र! इसके अनंतर वह समाधि नाम वैश्य और राजाओंमें श्रेष्ठ सुरथ राजा दोनों मिलकर उस मेधा नाम मुनिके पास गये और वहां यथान्याय और यथायोग्य प्रणामआदि करके ॥ ३६ ॥ ३७ ॥

उपविष्टौ कथाः काश्चिच्चक्रतुर्वैश्यपार्थिवौ ॥३८ ॥

राजोवाच ॥ ३९ ॥

भगवंस्त्वामहं प्रष्टुमिच्छाम्येकं वदस्व तत्॥ ४० ॥

बैठेहुए वे वैश्य और पार्थिव ( राजा ) कोई कथा कहने लगे ॥ ॥ ३८ ॥ राजा कहने लगा ॥ ३९ ॥ हे भगवन् ! मैं आपको एक वार्ता पूछनेकी इच्छा करताहूं सो कहो ॥ ४० ॥

दुःखाय यन्मे मनसः स्वचित्तायत्ततां विना ॥
ममत्वं गतराज्यस्य राज्यांगेष्वखिलेष्वपि ॥ ४१ ॥

जानतोऽपि यथाज्ञस्य किमेतन्मुनिसत्तम ॥
अयं च निकृतः पुत्रैर्दारैर्भृत्यैस्तथोज्झितः ॥४२॥
स्वजनेन च संत्यक्तस्तेषु हार्दी तथाप्यति ॥
एवमेष तथाऽहं च द्वावप्यत्यन्तदुःखितौ ॥ ४३ ॥

जिससे मेरे चित्तकी अधीनताके विना मेरे मनको बडा दुःख होता है सो यह कि गयेहुए राज्यके भी राज्य अंगोंमें जानते हुए की भी मेरी ममता ऐसी बनरही है कि जैसी मूर्खोंकी होती है और यह वैश्य भी पुत्र स्त्री भृत्य और इनका त्यागाहुवा निकल आया है ॥४१॥४२॥ स्वजनोंका त्यागाहुवा भी यह वैश्य उनमें अत्यंत स्नेह करताहै इस प्रकार यह और मैं अत्यंत दुःखित हौं ॥ ४३ ॥

दृष्टदोषेऽपि विषये ममत्वाकृष्टमानसौ ॥
तत्किमेतन्महाभाग यन्मोहो ज्ञानिनोरपि ॥ ४४ ॥
ममास्य च भवत्येषा विवेकान्धस्य मूढता ॥४५॥

हे महाभाग! जिसमें दोष देखाहै उसविषयमें भी हमारा मन ममतासे खिंचा हुवाहै, इसलिये हमारे ज्ञानियोंके भी ऐसा मोह होना इसका कौन कारण है ॥ ४४ ॥ ज्ञानसे अंधेहुएके मेरे और इस वैश्यके यह मूढता उत्पन्न होरही है ॥ ४५ ॥

ऋषिरुवाच ॥ ४६ ॥

ज्ञानमस्ति समस्तस्य जन्तोर्विषयगोचरे ॥४७॥
विषयश्च महाभाग याति चैवं पृथक्पृथक् ॥
दिवान्धाः प्राणिनः केचिद्रात्रावन्धास्तथा परे॥४८॥
केचिद्दिवा तथा रात्रौ प्राणिनस्तुल्यदृष्टयः ॥
ज्ञानिनो मनुजाः सत्यं किं नु ते नहि केवलम्॥४९॥

ऋषि कहने लगे कि ॥४६॥ संपूर्ण जंतुवोंको विषयगोचर (इंद्रियोंके समीप प्राप्त) होनेसे ज्ञान होताहै ॥४७॥ और हे महाभाग! वह विषय प्राणियोंको जुदाजुदा होताहै जैसे कि कितनेक प्राणी तो दिनमें अन्धे रहते हैं अर्थात् उनको रात्रिमेंही दीखताहै और कितनेक प्राणी रात्रिमें अन्धे रहतेहैं अर्थात् उनको दिनमें ही दीखता है॥४८॥ और कितनेक प्राणी दिनमें तथा रात्रिमें समान दृष्टिवालेहैं अर्थात् उन्हें एकसां दीखता है मनुष्य ज्ञानवान् हैं यह सत्य है परंतु केवल मनुष्य ही नहीं ज्ञानवान् हैं ॥ ४९ ॥

यतो हि ज्ञानिनः सर्वे पशुपक्षिमृगादयः ॥
ज्ञानं च तन्मनुष्याणां यत्तेषां मृगपक्षिणाम् ॥५०॥
मनुष्याणां च यत्तेषां तुल्यमन्यत्तथोभयोः ॥
ज्ञानेऽपि सति पश्यैतान्पतङ्गाञ्छावचञ्चुषु ॥ ५१ ॥
कणमोक्षादृतान्मोहात्पीड्यमानानपि क्षुधा ॥
मानुषा मनुजव्याघ्र साभिलाषाः सुतान्प्रति॥५२॥

जिससे संपूर्ण पशु पक्षी मृग आदि भी ज्ञानवान् हैं इसलिये जो ज्ञान मनुष्योंको है वही उन मृगपक्षियोंकोभी है॥५०॥ अन्य भी जो आहार निद्रा आदि मनुष्योंके हैं वह पक्षियोंके भी हैं इसलिये मनुष्य और पक्षियोंमें यह धर्मभी समानही है. ज्ञान होनेपर भी इन पक्षियोंको देखो कि आप क्षुधासे पीड्यमानभी हैं परंतु फिर भी मोहसे बच्चोंकी चोंचोंमें कैसे स्नेहसे चुगा दे रहे हैं मनुष्योंमें व्याघ्र (हे राजन्) इसी प्रकार अभिलाषावाले मनुष्य पुत्रोंके प्रति वर्ततेहैं ॥५१॥५२॥

लोभात्प्रत्युपकाराय नन्वेतान्किं न पश्यसि ॥
तथापि ममतावर्ते मोहगर्ते निपातिताः ॥ ५३ ॥

महामायाप्रभावेन संसारस्थितिकारिणा ॥
तन्नात्र विस्मयः कार्यो योगनिद्रा जगत्पतेः ॥५४॥
महामाया हरेश्चैषा तया संमोह्यते जगत् ॥
ज्ञानिनामपि चेतांसि देवी भगवती हि सा ॥ ५५ ॥
बलादाकृष्य मोहाय महामाया प्रयच्छति ॥
तया विसृज्यते विश्वं जगदेतच्चराचरम् ॥ ५६ ॥

कि लोभसे प्रत्युपकारके ऊपर लग रहेहैं इनको क्यों नहीं देखतेहो अर्थात् देखो कि पुत्र आदि प्रत्युपकार नहीं करतेहैं तौभी ये पिता माता आदि कर रहेहैं क्योंकि संसारकी स्थिति करनेवाला महामायाका प्रभाव ममतारूपहै और जिसमें ऐसी मोहरूप खाडीमें डाल रक्खेहैं इसलिये यहां आश्चर्य नहीं करना क्यों कि यह विष्णु भगवानकी योगनिद्रा है अर्थात् तमोगुणप्रधान शक्ति है ॥ ५३ ॥ ॥ ५४ ॥ यह जो हरिकी महामाया है इस करके जगत् मोहित हो रहाहै और यही महामाया देवी भगवती बलसे ज्ञानियोंकेभी चित्तको खैंचकर मोहमें डाल देती है और यह संपूर्ण चर अचर जगत् इसी करके रचा जाता है ॥ ५५ ॥ ५६ ॥

सैषा प्रसन्ना वरदा नृणां भवति मुक्तये ॥
सा विद्या परमा मुक्तेर्हेतुभूता सनातनी ॥ ५७ ॥
संसारबन्धहेतुश्च सैव सर्वेश्वरेश्वरी ॥ ५८ ॥

और यही प्रसन्न हुई मनुष्योंको मुक्तिरूप वर देती है और यही मनुष्योंकी मुक्तिको हेतु कारणरूप सनातन परम विद्या है ॥५७॥ और यही संपूर्ण ईश्वरोंकी ईश्वरी संसाररूप बंधनका कारणहै॥५८॥

राजोवाच ॥ ५९ ॥

भगवन्का हि सा देवी महामायेति यां भवान्॥६०॥

ब्रवीति कथमुत्पन्ना सा कर्मास्याश्च किं द्विज ॥
यत्प्रभावा च सा देवी यत्स्वरूपा यदुद्भवा ॥६१॥

हे भगवन् ! हे द्विज ! जिस देवीको आप महामाया कहतेहो वह कैसे उत्पन्न हुई है और इसका क्या कर्म है वह देवी जिस प्रभाववाली जिस स्वरूपवाली और जिस उत्पत्तिवाली है ॥ ६१ ॥

तत्सर्वं श्रोतुमिच्छामि त्वत्तो ब्रह्मविदांवर ॥ ६२ ॥
ऋषिरुवाच ॥ ६३ ॥
नित्यैव सा जगन्मूर्तिस्तया सर्वमिदं ततम् ॥६४॥

हे ब्रह्मवेत्ताओंमें श्रेष्ठ ! वह संपूर्ण मैं आपसे सुननेकी इच्छा करताहूं ॥ ६२ ॥ ऋषि कहने लगे ॥ ६३ ॥ वह जगन्मूर्ति ( जगत्की आधाररूप ) नित्यहै और उस करके यह संपूर्ण जगत्व्याप्त होरहाहै॥६४॥

तथापि तत्समुत्पत्तिर्बहुधा श्रूयतां मम ॥
देवानां कार्यसिद्ध्यर्थमाविर्भवति सा यदा ॥ ६५ ॥
उत्पन्नेति तदा लोके सा नित्याप्यभिधीयते ॥
योगनिद्रां यदा विष्णुर्जगत्येकार्णवीकृते ॥ ६६ ॥
आस्तीर्य शेषमभजत्कल्पान्ते भगवान्प्रभुः ॥
तदा द्वावसुरौ घोरौ विख्यातौ मधुकैटभौ ॥ ६७ ॥

तोभी उसकी बहुत प्रकारकी उत्पत्ति मुझसे सुनो. देवताओंके कार्यकी सिद्धिके लिये जिस कालमें वह प्रकट होतीहै ॥ ६५ ॥ उस कालमें वह नित्या भी लोकमें उत्पन्न हुई है ऐसे कहातीहै। प्रभु विष्णु भगवान् जगत्को जलमय कर योगनिद्राको आश्रित होकर जब शेषशय्यापर शयन ( सोना ) करते भये तब मधुकैटभ नामसे विख्यात दो घोर असुर ॥ ६६ ॥ ६७ ॥

विष्णुकर्णमलोद्भूतौ हन्तुं ब्रह्माणमुद्यतौ ॥
स नाभिकमले विष्णोः स्थितो ब्रह्मा प्रजापतिः॥६८॥
दृष्ट्वा तावसुरौ चोग्रौ प्रसुप्तं च जनार्दनम् ॥
तुष्टाव योगनिद्रां तामेकाग्रहृदयः स्थितः॥ ६९ ॥
विबोधनार्थाय हरेर्हरिनेत्रकृतालयाम् ॥
विश्वेश्वरीं जगद्धात्रीं स्थितिसंहारकारिणीम् ॥७०॥
निद्रां भगवतीं विष्णोरतुलां तेजसः प्रभुः ॥ ७१ ॥

विष्णु भगवान्‌के कानोंके मैलसे उत्पन्न होकर ब्रह्माके मारनेमें उद्यत ( तैयार ) हुए। फिर विष्णुके नाभिकमलमें स्थितहुवे वे प्रजापति ब्रह्मा ॥ ६८ ॥ उन दोनों भयंकर असुरोंको अपने मारनेमें उद्यत ( तैयार ) देखकर और जनार्दन भगवान्‌को सोते हुए देखकर एकाग्रचित्तसे स्थितहुये प्रभु ब्रह्मा हरि भगवान्‌के जगानेके लिये उस योगनिद्राकी स्तुति करतेभये कि जो विश्वेश्वरी, जगत्‌की माता, स्थिति संहारकी करनेवाली और विष्णुके तेजकी अतुलमूर्ति निद्रारूप भगवती हरिके नेत्रोंमें स्थान किये विराजमानथी ॥६९॥७०॥७१॥

ब्रह्मोवाच ॥ ७२ ॥

त्वं स्वाहा त्वं स्वधा त्वं हि वषट्कारः स्वरात्मिका ७३

ब्रह्मा कहने लगे ॥ ७२ ॥ तुम स्वाहा अर्थात् देवताओंको हव्य पहुँचानेवाली हो। तुम स्वधा हो अर्थात् पितरोंको कव्य पहुँचानेवाली हो। तुम वषट्कार अर्थात् यज्ञादिकोंमें देवताओंके बुलानेका मंत्रहो और तुम सोलह स्वररूप हो ॥ ७३ ॥

सुधा त्वमक्षरे नित्ये त्रिधामात्रात्मिका स्थिता ॥
अर्धमात्रास्थिता नित्या याऽनुच्चार्या विशेषतः ॥७४॥

त्वमेव संध्या सावित्री त्वं देवि जननी परा ॥
त्वयैतद्धार्यते विश्वं त्वयैतत्सृज्यते जगत् ॥ ७५ ॥
त्वयैतत्पाल्यते देवि त्वमत्स्यन्ते च सर्वदा ॥
विसृष्टौ सृष्टिरूपा त्वं स्थितिरूपा च पालने ॥७६॥

तुम अमृतरूपहो, हे वृद्धि ह्रासरो रहित, हे नित्ये ! ( हे सनातने) ह्रस्व, दीर्घ और प्लुतरूपसे स्थित हो, व्यंजनरूपसे स्थित हो, नित्या (सदा होनेवाली हो) और विशेषरूपसे वर्णन करनेमें नहीं आती हो ॥७४॥ तुम ही सत्त्वगुणरूपहो, तुम सावित्रीहो और हे देवि ! तुम ही श्रेष्ठ जननीहो और यह संपूर्ण जगत् तुम्हाराकरके धारण किया-जाताहै तुम्हाराकरके रचाजाताहै॥७५॥और तुम्हारा करके ही पालन कियाजाताहै और हे देवि ! संपूर्ण कालमें तुमही इस जगत्का संहार करती हो और हे जगन्मये ! इस जगत्के सृष्टिकालमें तुम सृष्टिरूप हो पालनमें स्थितिरूप हो ॥ ७६ ॥

तथा संहृतिरूपान्ते जगतोऽस्य जगन्मये ॥
महाविद्या महामाया महामेधा महास्मृतिः ॥ ७७ ॥
महामोहा च भवती महादेवी महासुरी ॥
प्रकृतिस्त्वं च सर्वस्य गुणत्रयविभाविनी ॥ ७८ ॥
कालरात्रिर्महारात्रिर्मोहरात्रिश्च दारुणा ॥
त्वं श्रीस्त्वमीश्वरी त्वं ह्रीस्त्वं बुद्धिर्बोधलक्षणा॥७९॥

और हे जगमन्ये ! इस जगत्के अंतमें संहाररूप हो तुम ही महा-विद्या, महामाया, महामेधा और महास्मृतिरूपहो ॥७७॥ और तुमही महामोहा, महादेवी, महासुरीहो, इस संपूर्ण जगत्की सत्त्व, रज, तमगुणो-वाली प्रकृति तुमही हो॥ ७८ ॥ और कालरात्रि ( ब्रह्माकी प्रलय-

रूप ) महारात्रि ( प्रलयकी रात्रिरूप ) और दारुण मोहरात्रि तुम ही हो तुम श्री हो ईश्वरी हो ह्री ( लज्जारूप ) हो और तुम ही बोधको जनानेंवाली बुद्धिरूप हो ॥ ७९ ॥

लज्जा पुष्टिस्तथा तुष्टिस्त्वं शान्तिः क्षान्तिरेव च ॥
खड्गिनी शूलिनी घोरा गदिनी चक्रिणी तथा॥८०॥
शंखिनी चापिनी बाणभुशुण्डी परिघायुधा ॥
सौम्या सौम्यतरा शेषसौम्येभ्यस्त्वतिसुन्दरी॥८१॥

लज्जा, पुष्टि तथा तुष्टिरूप शांति और क्षांति ( क्षमारूप ) तुम ही हो और तुम खड्गवाली, शूलवाली, भयंकररूप गदावाली और चक्रवाली हो अर्थात् इन शस्त्र अस्त्रोंको धारण करती हो ॥८०॥ और तुम शंखवाली, धनुषवाली हो और बाण भुशुण्डी और परिघ (लोहदंड) इनको धारण करनेवालीहो और सौम्यरूपा अत्यंत सौम्यरूपाहो और संपूर्ण सौम्यवस्तुवोंसे अत्यंत सुंदरीहो ॥ ८१ ॥

परापराणां परमा त्वमेव परमेश्वरी ॥
यच्च किंचित्क्वचिद्वस्तु सदसद्वाखिलात्मिके ॥ ८२ ॥
तस्य सर्वस्य या शक्तिः सा त्वं किं स्तूयसे तदा ॥
यया त्वया जगत्स्रष्टा जगत्पात्यत्ति यो जगत्॥८३॥
सोऽपि निद्रावशं नीतः कस्त्वां स्तोतुमिहेश्वरः ॥
विष्णुः शरीरग्रहणमहमीशान एव च ॥ ८४ ॥
कारितास्ते यतोऽतस्त्वां कः स्तोतुं शक्तिमान्भवेत्॥
सा त्वमित्थं प्रभावैः स्वैरुदारैर्देवि संस्तुता ॥८५॥

पर अपरोंमें श्रेष्ठ तुमहो और परमेश्वरी तुमही हो और हे अखिलात्मिके! (हे संपूर्णोंका आत्मारूप) कहीं कोई भी जो सत् और असत्

वस्तुहै ॥ ८२ ॥ उन संपूर्णोंकी शक्ति तुमहो इस लिये कैसे स्तुति की जासक्ती है और जगत्को रचनेवाले जगत्का पालन करनेवाले और जगत्का संसार करनेवाले जो भगवान्हैं॥८३॥ वे भी जिस तुम करके निद्रावशमें प्राप्त होगये तो फिर ऐसे गुणोंवालीकी आपकी स्तुति करनेको कौन समर्थ है अर्थात् कोई भी स्तुति करनेको समर्थ नहीं जिससे विष्णुको मुझको (ब्रह्माको) शिवको तुमने शरीर धारण करादियाहै फिर इसलिये अन्य तो कौन जन तुम्हारी स्तुति करनेको समर्थ होसक्ता है ! अर्थात् कोई भी नहीं समर्थ होसक्ता. हे देवि ! ऐसी वह तुम अपने बडे माहात्म्यों करके ऐसे स्तुति कीगईहो ॥८४॥८५॥

मोहयैतौ दुराधर्षावसुरौ मधुकैटभौ ॥
प्रबोधं च जगत्स्वामी नीयतामच्युतो लघु ॥८६॥
बोधश्च क्रियतामस्य हन्तुमेतौ महासुरौ ॥ ८७ ॥
ऋषिरुवाच ॥ ८८ ॥

हे भगवति ! अब दुराधर्ष ( बडे प्रभाववाले ) इन मधु कैटभ असुरोंको मोह कराओ और जगत्के स्वामी जो अच्युत भगवान्हैं उनको शीघ्र प्रबोध करावो अर्थात् जगाओ ॥८६॥ और इन महा असुरोंके मारनेको भगवान्को ज्ञान कराओ अर्थात् सूचना करो॥८७॥ऋषि कहने लगे ॥ ८८ ॥

एवं स्तुता तदा देवी तामसी तत्र वेधसा ॥ ८९॥
विष्णोः प्रबोधनार्थाय निहन्तुं मधुकैटभौ ॥
नेत्रास्यनासिकाबाहुहृदयेभ्यस्तथोरसः॥ ९० ।
निर्गम्य दर्शने तस्थौ ब्रह्मणोऽव्यक्तजन्मनः ॥
उत्तस्थौ च जगन्नाथस्तया मुक्तो जनार्दनः ॥९१॥

जब योगनिद्रारूप देवीकी ब्रह्माने ऐसी स्तुति करी ॥ ८९॥ तब विष्णु भगवान्के जगाने और मधु कैटभ दैत्योंके मारनेके लिये भगवान्के नेत्र मुख नासिका भुजा हृदय और छाती ॥ ९० ॥ इन अंगोंसे निकलकर प्रकटजन्म जो ब्रह्माहैं उनको दर्शन देनेके लिये सन्मुख स्थित होगई और उस योगनिद्राके छोड़े हुए जनार्दन भगवान् भी सोनेसे उठ बैठेहुए ॥ ९१ ॥

एकार्णवेऽहिशयनात्ततः स ददृशे च तौ ॥
मधुकैटभौ दुरात्मानावतिवीर्यपराक्रमौ ॥ ९२॥
क्रोधरक्तेक्षणावत्तुं ब्रह्माणं जनितोद्यमौ ॥
समुत्थाय ततस्ताभ्यां युयुधे भगवान्हरिः ॥ ९३ ॥
पंचवर्षसहस्राणि बाहुप्रहरणो विभुः ॥
तावप्यतिबलोन्मत्तौ महामायाविमोहितौ ॥ ९४ ॥

और उस जलमय देशमें विछीहुई शेषशय्यापर स्थितहुए विष्णु भगवान् उन मधु कैटभ दैत्योंको देखते भये.कैसे वे दैत्यहैं कि दुरात्मा (दुष्ट आत्मावाले) अत्यंत वीर्य और पराक्रमवाले ॥९२॥ क्रोधसे रक्तनेत्रोंवाले, ब्रह्माके भक्षण करनेमें उद्युक्त (उद्यमवाले) तिसके अनंतर बाहुरूप शस्त्रोंवाले विभु हरि भगवान्ने उठकर पांच हजार वर्षोंतक उनके साथ युद्ध किया. पश्चात् महामायासे विमोहितहुए और अत्यंत बलसे उन्मत्त हुए वे दैत्य ॥ ९३ ॥ ९४ ॥

उक्तवन्तौ वरोऽस्मत्तो व्रियतामिति केशवम् ॥९५॥
श्रीभगवानुवाच ॥ ९६ ॥
भवेतामद्य मे तुष्टौ मम वध्यावुभावपि ॥ ९७ ॥

केशव भगवान्से कहनेलगे कि हमसे वर माँग ॥ ९५ ॥ श्रीभग-

वान् कहनेलगे ॥ ९६ ॥ जो तुम दोनों हमारे ऊपर प्रसन्न हो तौ अब हमारे करके बध्य होजाओ अर्थात् मारेजाओ ॥ ९७ ॥

किमन्येन वरेणात्र एतावद्धि वृतं मया ॥ ९८ ॥

ऋषिरुवाच ॥ ९९ ॥

वञ्चिताभ्यामिति तदा सर्वमापोमयं जगत् ॥१००॥
विलोक्य ताभ्यां गदितो भगवान्कमलेक्षणः ॥
आवां जहि न यत्रोर्वी सलिलेन परिप्लुता ॥ १ ॥

यहां अन्य वरसे हमारा कोई प्रयोजन नहीं यही वर मैंने मांगा ॥ ९८ ॥ ऋषि कहने लगे ॥ ९९ ॥ इस प्रकारके वचनोंसे ठगेहुए वे मधुकैटभ दैत्य उस कालमें संपूर्ण जगत्को जलमय देखकर कमलसरीखे नेत्रोंवाले भगवान्से कहने लगे कि हे विष्णो ! जहां जलोंसे व्याप्त पृथ्वी नहीं है वहां हमारेको मारो ॥ १०० ॥ १०१ ॥

ऋषिरुवाच ॥ २ ॥

तथेत्युक्त्वा भगवता शंखचक्रगदाभृता ॥
कृत्वा चक्रेण वै छिन्ने जघने शिरसी तयोः ॥ ३ ॥
एवमेषा समुत्पन्ना ब्रह्मणा संस्तुता स्वयम् ॥
प्रभावमस्या देव्यास्तु भूयःशृणु वदामि ते ॥१०४॥
इति मार्कण्डेय पुराणे सावर्णिके मन्वन्तरे देवीमाहात्म्ये मधुकैटभवधे प्रथमोऽध्यायः ॥ १ ॥

ऋषि कहनेलगे ॥१०२॥ शंख, चक्र और गदाओंको धारण करनेवाले भगवान् "ऐसाही होगा" यह कहकर और उन मधुकैटभ दैत्योंको अपनी जंघाओंपर डालकर चक्रसे उनका शिर काटते भये ॥ १०३ ॥ इस प्रकार ब्रह्मासे स्तुत कीहुई यह देवी भगवती आप उ-

उत्पन्नहुईहै अब इस देवीका प्रभाव मैं तुझसे फिर कहताहूं सो सुनो १०४
इति श्रीमार्कण्डेयपुराणे सावर्णिके मन्वंतरे देवीमाहात्म्ये मधुकैटभवधे पंडितनंदलालकृत भाषाटीकायां प्रथमोऽध्यायः ॥ १ ॥

---

## द्वितीयोऽध्यायः ।

अस्य श्रीमध्यमचरितस्य, विष्णुर्ऋषिः महालक्ष्मीर्देवता ॥ उष्णिक्छन्दः ॥ शाकम्भरी शक्तिः ॥ दुर्गा बीजम् ॥ वायुस्तत्त्वम् ॥ यजुर्वेदः स्वरूपम् ॥ महालक्ष्मीप्रीत्यर्थं मध्यमचरितजपे विनियोगः ॥ ॐअक्षस्रक्परशुं गदेषुकुलिशं पद्मं धनुश्चाण्डिकां दण्डं शक्तिमसिं च चर्म जलजं घण्टां सुराभाजनम् ॥ शूलं पाशसुदर्शने च दधतीं हस्तैः प्रसन्नाननां सेवे सैरिभमर्दिनीमिह महालक्ष्मीं सरोजस्थिताम् ॥

इस श्रीमध्यमचारित्रके विष्णु ऋषि हैं, महालक्ष्मी देवता हैं, उष्णिक् छंद है, शाकंभरी शक्ति है, दुर्गा बीज है, वायु तत्व है और यजुर्वेद मूर्ति है महालक्ष्मीकी प्रीतिके लिये इस मध्यमचरित्रके पाठमें विनियोग है ( ऐसे कहकर जल छोडना ) ॥ रुद्राक्षकी माला, फरसा, गदा, बाण, वज्र, पद्म, धनुष, कुंडी, दंड, शक्ति, तलवार, ढाल, कमल, घंटा, मदिराका पात्र, शूल, फांसी और सुदर्शन चक्र इनको हाथोंमें धारण किये मूँगेके समान कांतिवाली और महिषासुरको मर्दन करनेवाली ऐसी कमलपर स्थित महालक्ष्मीका यहां हम ध्यान करते हैं ॥१॥

ऋषिरुवाच ॥ १ ॥

देवासुरमभूद्युद्धं पूर्णमब्दशतं पुरा ॥

महिषेऽसुराणामधिपे देवानां च पुरन्दरे ॥ २ ॥
तत्रासुरैर्महावीर्यैर्देवसैन्यं पराजितम् ॥
जित्वा च सकलान्देवान्निन्द्रोऽभून्महिषासुरः ॥३॥
ततः पराजिता देवाः पद्मयोनिं प्रजापतिम् ॥
पुरस्कृत्य गतास्तत्र यत्रेशगरुडध्वजौ ॥ ४ ॥

ऋषि कहने लगे ॥ १ ॥ पहले ( प्रथम कल्पमें ) पूरे सौ वर्षोंतक देवता और असुरोंका युद्ध हुवा जब कि असुरोंका स्वामी महिषासुर और देवताओंका स्वामी इंद्रथा ॥ २ ॥ उस युद्धमें महावीर्यवाले असुरोंने देवताओंकी सेना हरादी तब संपूर्ण देवताओंको जीत कर महिषासुर इंद्र होगया ॥ ३ ॥ तिसके अनंतर हारेहुए देवता प्रजापति ब्रह्माको आगे करके जहां महादेव और विष्णु थे वहां गए ॥ ४ ॥

यथावृत्तं तयोस्तद्वन्महिषासुरचेष्टितम् ॥
त्रिदशाः कथयामासुर्देवाभिभवविस्तरम् ॥ ५ ॥
सूर्येन्द्राग्न्यनिलेन्दूनां यमस्य वरुणस्य च ॥
अन्येषां चाधिकारान्स स्वयमेवाधितिष्ठति ॥ ६ ॥
स्वर्गान्निराकृताः सर्वे तेन देवगणा भुवि ॥
विचरन्ति यथा मर्त्या महिषेण दुरात्मना ॥ ७ ॥

और जाकर देवताओंका तिरस्कारका विस्तारपूर्वक जैसा महिषासुरका चेष्टितरूप वृत्तांत था वैसा ही देवता कहते भये कि॥५॥सूर्य, इन्द्र, अग्नि, वायु, चंद्रमा, धर्मराज, वरुण इन सबके और अन्य देवताओंके अधिकारोंको छीनकर वह आप स्थित होगया ॥ ६ ॥ और उस दुरात्मा महिषासुरके निकले हुए संपूर्ण देवगण पृथ्वीपर ऐसे विचरते हैं कि जैसे मनुष्य विचरते हैं ॥ ७ ॥

एतद्वः कथितं सर्वममरारिविचेष्टितम् ॥
शरणं वः प्रपन्नाः स्मो वधस्तस्य विचिन्त्यताम् ॥८॥
इत्थं निशम्य देवानां वचांसि मधुसूदनः ॥
चकार कोपं शंभुश्च भ्रुकुटीकुटिलाननौ ॥ ९ ॥
ततोऽतिकोपपूर्णस्य चक्रिणो वदनात्ततः ॥
निश्चक्राम महत्तेजो ब्रह्मणः शंकरस्य च ॥ १० ॥

यह देवताओंके शत्रु महिषासुरका चेष्टित आपके प्रति कहा और विशेष हम क्या कहैं हम आपके शरणमें प्राप्त हुए हैं उस दुष्टके मारनेका विचार करो ॥ ८ ॥ मधुसूदन ( भगवान् ) और महादेव ऐसे देवताओंके वचन सुनकर क्रोधसे व्याप्त होगए और भ्रुकुटियें चढाकर बाँके मुख करलिये ॥९॥ तिसके अनंतर अतिकोपसे पूर्ण हुए विष्णु भगवान्‌के मुखसे और ब्रह्मा तथा महादेवके मुखसे बडा तेज निकला॥१०॥

अन्येषां चैव देवानां शक्रादीनां शरीरतः ॥
निर्गतं सुमहत्तेजस्तच्चैक्यं समगच्छत ॥ ११ ॥
अतीव तेजसः कूटं ज्वलन्तमिव पर्वतम् ॥
ददृशुस्तेऽसुरास्तत्र ज्वालाव्याप्तदिगन्तरम् ॥ १२ ॥
अतुलं तत्र तत्तेजः सर्वदेवशरीरजम् ॥
एकस्थं तदभून्नारी व्याप्तलोकत्रयं त्विषा ॥ १३ ॥

और अन्य भी इंद्रआदि देवताओंके शरीरसे बहुत बडा तेज निकला और निकल कर इकट्ठा होगया ॥ ११ ॥ जिसकी ज्वालाने संपूर्ण दिशा व्याप्त करी है और जलतेहुए पर्वतके समान ऐसा अत्यंत तेजका उस पुंजको वहां वे देवता देखते भये ॥१२॥ संपूर्ण देवता-

ओंके शरीरोंसे उत्पन्न हुवा वह इकट्ठा अतुल तेज अपनी कांतिसे तीनों लोकोंको व्याप्त करके एक स्त्रीरूप होगया ॥ १३ ॥

यदभूच्छांभवं तेजस्तेनाजायत तन्मुखम् ॥
याम्येन चाभवन्केशा बाहवो विष्णुतेजसा ॥१४॥
सौम्येन स्तनयोर्युग्मं मध्यं चैन्द्रेण चाभवत् ॥
वारुणेन च जंघोरू नितम्बस्तेजसा भुवः ॥ १५ ॥
ब्रह्मणस्तेजसा पादौ तदंगुल्योऽर्कतेजसा ॥
वसूनां च करांगुल्यः कौबेरेण च नासिका ॥१६॥
तस्यास्तु दन्ताः संभूताः प्राजापत्येन तेजसा ॥
नयनत्रितयं जज्ञे तथा पावकतेजसा ॥ १७ ॥

उसमें जो महादेवका तेज था उससे तो उस स्त्रीका मुख हुवा धर्मराजके तेजसे केश (बाल) हुए और विष्णुके तेजसे भुजा हुई ॥ १४ ॥ चंद्रमाके तेजसे दोनों कुच हुए, इंद्रके तेजसे मध्यभाग, वरुणके तेजसे दोनों जंघाएँ और पृथ्वीके तेजसे दोनों निबंत हुवे ॥ १५ ॥ ब्रह्माके तेजसे दोनों पाँवे, सूर्यके तेजसे पाँवोंकी संपूर्ण अंगुलियां, आठ वसुवोंके तेजसे हाथोंकी संपूर्ण अंगुलियां और कुबेरके तेजसे इसकी नासिका होती भई ॥१६॥ फिर प्रजापतिके तेजसे इसके संपूर्ण दांत और अग्निके तेजसे तीन नेत्र उत्पन्न होते भये ॥ १७ ॥

भ्रुवौ च संध्ययोस्तेजः श्रवणावनिलस्य च ॥
अन्येषां चैव देवानां संभवस्तेजसां शिवा ॥१८॥
ततः समस्तदेवानां तेजोराशिसमुद्भवाम् ॥
तां विलोक्य मुदं प्रापुरमरा महिषार्दिताः ॥ १९ ॥
शूलं शूलाद्विनिष्कृष्य ददौ तस्यै पिनाकधृक् ॥

चक्रं च दत्तवान्कृष्णः समुत्पाद्य स्वचक्रतः ॥२०॥

इस के अनंतर दोनों संध्याओंके तेजसे इसकी भ्रुकुटियां वायुके तेजसे इसके दोनों कान उत्पन्न हुए और अन्य संपूर्ण देवताओंके तेजसे शिवा (दुर्गा) उत्पन्न हुई ॥१८॥ तिसके अनंतर महिषासुरसे पीडित हुए संपूर्ण देवता संपूर्ण देवताओंके तेजःपुंजसे उत्पन्न हुई उस दुर्गाको देखकर प्रसन्न होगए ॥ १९ ॥ फिर महादेवजीने तो अपने त्रिशूलमेंसे त्रिशूल निकाल कर उस दुर्गाको दिया और भगवान्ने अपने चक्रमाँहसे चक्र निकाल कर दिया ॥ २० ॥

शंखं च वरुणः शक्तिं ददौ तस्यै हुताशनः ॥
मारुतो दत्तवांश्चापं बाणपूर्णे तथेषुधी ॥ २१ ॥
वज्रमिन्द्रः समुत्पाद्य कुलिशादमराधिपः ॥
ददौ तस्य सहस्राक्षो घण्टामैरावताद्गजात् ॥ २२ ॥
कालदण्डाद्यमो दण्डं पाशं चाम्बुपतिर्ददौ ॥
प्रजापतिश्चाक्षमालां ददौ ब्रह्मा कमण्डलुम् ॥ २३ ॥

इसी प्रकार वरुणने शंख, अग्निने शक्ति, पवनने धनुष और बाणोंसे भरे हुए दो तरकस दिये ॥२१॥ और देवताओंके अधिपति इंद्रने अपने वज्रसे निकाल कर दिया और उसी इंद्रने अपने ऐरावत हस्तीसे घंटा निकाल कर उस दुर्गाको दई ॥२२॥ और धर्मराजने अपने कालदंडसे निकाल कर दंड, वरुणने पाश, प्रजापतिने रुद्राक्षकी माला और ब्रह्माने कमंडलु दिया ॥ २३ ॥

समस्तरोमकूपेषु निजरश्मीन्दिवाकरः ॥
कालश्च दत्तवान्खड्गं तस्याश्चर्म च निर्मलम् ॥ २४ ॥
क्षीरोदश्चामलं हारमजरे च तथाऽम्बरे ॥

चूडामणिं तथा दिव्यं कुण्डले कटकानि च ॥ २५ ॥
अर्धचन्द्रं तथा शुभ्रं केयूरान्सर्वबाहुषु ॥
नूपुरौ विमलौ तद्वद्ग्रैवेयकमनुत्तमम् ॥ २६ ॥
अंगुलीयकरत्नानि समस्तास्वंगुलीषु च ॥
विश्वकर्मा ददौ तस्यै परशुं चातिनिर्मलम् ॥ २७ ॥

और संपूर्ण रोमकूपों ( रोमछिद्रों ) में सूर्यने अपनी किरणें दईं, कालने खड्ग और सुंदर ढाल उस देवीको दई ॥ २४ ॥ और क्षीर-समुद्रने स्वच्छ मोतियोंका हार, उज्वल वस्त्र, दिव्य चूडामणि, कुंडल, कटक ( कडे ) ॥ २५ ॥ स्वच्छ अर्धचंद्र ( श्वेतवैना ) संपूर्ण भुजाओंमें बाजूबंद, सुंदर पाजेबें और बडी कीमतका कंठका आभूषण ॥२६॥ और संपूर्ण अंगुलियोंमें रत्नजटित अँगुठियाँ दईं और विश्वकर्माने अत्यंत निर्मल फरसा उस दुर्गाको दिया ॥ २७ ॥

अस्त्राण्यनेकरूपाणि तथाऽभेद्यं च दंशनम् ॥
अम्लानपङ्कजां मालां शिरस्युरसि चापराम् ॥२८॥
अददज्जलधिस्तस्यै पंकजं चातिशोभनम् ॥
हिमवान्वाहनं सिंहं रत्नानि विविधानि च ॥ २९ ॥
ददावशून्यं सुरया पानपात्रं धनाधिपः ॥
शेषश्च सर्वनागेशो महामणिविभूषितम् ॥ ३० ॥
नागहारं ददौ तस्यै धत्ते यः पृथिवीमिमाम् ॥
अन्यैरपि सुरैर्देवी भूषणैरायुधैस्तथा ॥ ३१ ॥
संमानिता ननादोच्चैः साट्टहासं मुहुर्मुहुः ॥
तस्या नादेन घोरेण कृत्स्नमापूरितं नभः ॥ ३२ ॥

और अनेक प्रकारके अस्त्र तथा किसीसे कट न सके ऐसा कवच दिया और समुद्रने खिलेहुए कमलोंकी दो मालाएँ शिर और कंठमें धारण करनेको दीं और क्रीडाके लिये एक सुंदर कमल दिया और हिमगवान्ने सिंहवाहन तथा अनेक प्रकारके रत्न दिये ॥ २८ ॥ ॥ २९ ॥ और कुबेरने मदिरासे भराहुवा प्याला दिया और जो इस पृथ्वीको धारण करताहै ऐसे संपूर्ण नागोंके ईश्वर शेषने महामणियोंसे विभूषित नागहार दिया. इसी प्रकार अन्यभी देवताओंने भूषण और आयुधोंकरके संमानित करीहुई उस देवीने अट्टहास अर्थात् शब्दसहित हास किया जिसके हंसनेके शब्दसे संपूर्ण आकाश व्याप्त होगया ॥ ३० ॥ ३१ ॥ ३२ ॥

अमायतातिमहता प्रतिशब्दो महानभूत् ॥
चुक्षुभुः सकला लोकाः समुद्राश्च चकम्पिरे ॥३३॥
चचाल वसुधा चेलुः सकलाश्च महीधराः ॥
जयेति देवाश्च मुदा तामूचुः सिंहवाहिनीम् ॥ ३४ ॥
तुष्टुवुर्मुनयश्चैनां भक्तिनम्रात्ममूर्तयः ॥
दृष्ट्वा समस्तं संक्षुब्धं त्रैलोक्यममरारयः ॥ ३५ ॥

फिर आकाशमें नहीं समातेहुए उस महान् तेज करके बडा एक प्रतिशब्द अर्थात् कूंवोंमें या गुंवजोंमें बोलनेके पश्चात् जैसा प्रतिशब्द होताहै ऐसा प्रतिशब्द हुवा उससे संपूर्ण लोक डिगमिग होगए और समुद्र कांपने लगे ॥३३॥ और पृथ्वी तथा संपूर्ण पहाड़ हिलने लगे तब उस सिंहवाहनवाली देवीके सामने प्रसन्नहुए संपूर्ण देवता जय २ शब्द करनेलगे ॥ ३४ ॥ और भक्तिसे नम्र है आत्मा और शरीर जिनका ऐसे मुनि इस भगवतीकी स्तुति करने लगे और असुर संपूर्ण त्रैलोकीके ऐसे संचलित देखकर ॥ ३५ ॥

सन्नद्धाखिलसैन्यास्ते समुत्तस्थुरुदायुधाः ॥
आःकिमेतदिति क्रोधादाभाष्य महिषासुरः॥३६॥
अभ्यधावत तं शब्दमशेषैरसुरैर्वृतः ॥
स ददर्श ततो देवीं व्याप्तलोकत्रयां त्विषा ॥३७॥

संपूर्ण सेनाकी तैयारी किये अस्त्र शस्त्रोंको लिये उठे और महिषासुर क्रोधसे " आह यह क्या है" ऐसा कहकर ॥३६॥ संपूर्ण असुरोंको साथ लिये महिषासुर उस शब्दकी तरफ दौड़ा और वह देवी देखी की अपनी कांतिसे त्रिलोकी जिसने व्याप्त कररक्खी है ॥३७॥

पादाक्रान्त्या नतभुवं किरीटोल्लिखिताम्बराम् ॥
क्षोभिताशेषपातालां धनुर्ज्यानिःस्वनेन ताम् ॥३८॥
दिशो भुजसहस्रेण समन्ताद्व्याप्य संस्थिताम् ॥
ततः प्रववृते युद्धं तया देव्या सुरद्विषाम् ॥ ३९ ॥

पावोंके आक्रमणसे जिसने भूमि नवाय रक्खी है,मुकुटसे जिसने अंबर छूरक्खाहै, धनुषकी प्रत्यंचाके टंकारसे जिसने संपूर्ण पातालको पारक्खेहैं ॥३८॥ हजार भुजाओंसे जिसने चारोंतरफ दिशाएँ व्याप्त कररक्खी है ऐसी देवी वहां स्थितहुई देखी और उन असुरोंका उस देवीके साथ युद्ध होना शुरू हुवा ॥ ३९ ॥

शस्त्रास्त्रैर्बहुधा मुक्तैरादीपितदिगन्तरम् ॥
महिषासुरसेनानीश्चिक्षुराख्यो महासुरः ॥ ४० ॥
युयुधे चामरश्चान्यैश्चतुरंगबलान्वितः ॥
रथानामयुतैः षड्भिरुदग्राख्यो महासुरः ॥४१॥
अयुध्यतायुतानां च सहस्रेण महाहनुः ॥
पञ्चाशद्भिश्च नियुतैरसिलोमा महासुरः ॥ ४२ ॥

अयुतानां शतैः षड्भिर्बाष्कलो युयुधे रणे ॥
गजवाजिसहस्रौघैरनेकैः परिवारितः ॥ ४३ ॥

और बहुत प्रकारसे छोडे हुए शस्त्रअस्त्रोंकरके दशोंदिशाएँ प्रकाशित होगई पश्चात् महिषासुरकी सेनाके अधिपति महा असुर चिक्षुर नाम ॥४०॥ युद्ध करनेलगा और चतुरंगिणी सेनासे युक्त अमर नाम दैत्य अन्य सेनाको साथ लेकर युद्ध करने लगा और उदग्र नाम महा असुर साठ हजार रथोंको साथ लेकर ॥ ४१ ॥ और महाहनु नाम असुर एक करोड रथोंको साथ लेकर और असिलोमा नाम महा असुर पाँच करोड रथोंकी सेनाको साथ लेकर युद्ध करने लगे ॥४२॥ और बाष्कल नाम असुर साठ लाख रथोंकी सेनासे और हजारहां हस्ति घोडाओंकी अनेक प्रकारकी सेनाओंसे युक्त होकर रणमें युद्ध करनेलगे ॥ ४३ ॥

वृतो रथानां कोट्या च युद्धे तस्मिन्नयुध्यत ॥
बिडालाख्योऽयुतानां च पञ्चाशद्भिरथायुतैः ॥४४॥
युयुधे संयुगे तत्र रथानां परिवारितः ॥
अन्ये च तत्रायुतशो रथनागहयैर्वृताः ॥ ४५ ॥
युयुधुः संयुगे देव्या सह तत्र महासुराः ॥
कोटिकोटिसहस्रैस्तु रथानां दन्तिनां तथा ॥ ४६ ॥
हयानां च वृतो युद्धे तत्राभून्महिषासुरः ॥
तोमरैर्भिन्दिपालैश्च शक्तिभिर्मुसलैस्तथा ॥ ४७ ॥

और विडाल नाम दैत्य उस युद्धमें प्रथम एक करोड़ रथोंको साथ लेकर लड़ा और पीछे हार होनेपर पांच लाख रथोंको साथ लेकर लडा और अन्यभी वहां महाअसुर वहां युद्धमें दशहजार रथ हस्ती

और घोडे साथ लेकर युद्ध करने लगे पश्चात् महिषासुर हजारहां क-
रोड़ रथ हस्ती और घोड़ोको साथ लेकर युद्धमें आकर प्राप्त हुवा फिर
सेनाके असुर तोमर भिन्दिपाल शक्ति मूसलों॥४४॥४५॥४६॥४७॥

युयुधुः संयुगे देव्या खड्गैः परशुपट्टिशैः ॥
केचिच्च चिक्षिपुः शक्तीः केचित्पाशांस्तथापरे ॥४८॥
देवीं खड्गप्रहारैस्तु ते तां हन्तुं प्रचक्रमुः ॥
सापि देवी ततस्तानि शस्त्राण्यस्त्राणि चण्डिका ४९
लीलयैव प्रचिच्छेद निजशस्त्रास्त्रवर्षिणी ॥
अनायस्तानना देवीस्तूयमाना सुरर्षिभिः ॥ ५० ॥

खड्ग, फरसा, पट्टिशों करके उस रणभूमिमें देवीके साथ युद्ध करने लगे वहां कितनेक तो शक्तियोंको फेंकने लगे और कितनेक अन्य असुर पाशोंको फेंकने लगे ॥४८॥ इसके अनंतर वे असुर तलवारोंसे मारनेको उस देवीकी तरफ दौडे और प्रहार करनेपर अपने शस्त्र अस्त्रोंको वर्षानेवाली उस चंडिकादेवीने वे शस्त्रअस्त्रलीला करकेही काटडाले पश्चात् सुरर्षियोंकरके स्तुत करीहुई वह ईश्वरी देवी प्रसन्न होकर ॥ ४९ ॥ ५० ॥

मुमोचासुरदेहेषु शस्त्राण्यस्त्राणि चेश्वरी ॥
सोऽपि क्रुद्धो धुतसटो देव्या वाहनकेसरी ॥ ५१ ॥
चचारासुरसैन्येषु वनेष्विव हुताशनः ॥
निःश्वासान्मुमुचे यांश्च युध्यमाना रणेऽम्बिका ५२
त एव सद्यः सम्भूता गणाः शतसहस्रशः ॥
युयुधुस्ते परशुभिर्भिन्दिपालासिपट्टिशैः ॥ ५३ ॥

असुरोंके शरीरोंपर शस्त्र अस्त्र छोडनेलगी और कँपाएहैं केंधवालके

बाल जिसने ऐसा वह देवीका वाहन सिंह क्रुद्ध होकर असुरोंकी सेनाको नष्ट करताहुवा ऐसे विचरने लगा कि जैसे वनको नष्ट करता हुवा अग्नि विचरताहै और रणमें युद्ध करतीहुई अम्बिका देवी क्रोधसे जिन श्वासोंको छोडती भई ॥ ५१ ॥ ५२ ॥ वेही श्वास शीघ्रही सैंकडों हजारों गण होगए और फरसे, भिन्दिपाल, खड्ग और पट्टिशों करके युद्ध करनेलगे ॥ ५३ ॥

नाशयन्तोऽसुरगणान्देवीशक्त्युपबृंहिताः ॥
अवादयन्त पटहान् गणाः शंखांस्तथापरे ॥ ५४ ॥
मृदङ्गांश्च तथैवान्ये तस्मिन्युद्धमहोत्सवे ॥
ततो देवी त्रिशूलेन गदया शक्तिऋष्टिभिः ॥ ५५ ॥
खड्गादिभिश्च शतशोनिजघान महासुरान् ॥
पातयामास चैवान्यान्घण्टास्वनविमोहितान् ॥ ५६ ॥

देवीकी शक्तिसे बढ़ेहुए वे दैत्य असुरोंके गणोंका नाश करतेहुए उस युद्धरूप महोत्सवमें कितनेक ढोल बजाते भये और कितनेक शंख बजाते भये और अन्य मृदंगोंको बजाते भये तिसके अनंतर वह देवी त्रिशूल, गदाओंकरके और शक्तियोंकी वर्षाओंकरके ॥ ५४ ॥ ५५ ॥ और खड्ग आदिकों करके सैंकडों महा असुरोंको तो मारती भई और अन्य असुरोंको घंटाके शब्दोंसे मोहित करके डालदेतीभई ॥ ५६ ॥

असुरान् भुवि पाशेन बद्ध्वा चान्यानकर्षयत् ॥
केचिद्द्विधाकृतास्तीक्ष्णैःखड्गपातैस्तथापरे ॥ ५७ ॥
विपोथिता निपातेन गदया भुवि शेरते ॥
वेमुश्च केचिद्रुधिरं मुसलेन भृशं हताः ॥ ५८ ॥

और कितनेक असुरोंको पाशसे बांधकर पृथ्वीपर खेंचतीभई

और कितनेक असुरोंको खड्गोंके प्रहारोंसे टुकडे करडाले और कितनेक ॥५७॥ गदासे मारकर पृथ्वीपर सुलादिये और कितनेक असुर मूसलसे बहुत कूटेहुए मुखसे रुधिर गिरानेलगे ॥ ५८ ॥

केचिन्निपातिता भूमौ भिन्नाः शूलेन वक्षसि ॥
निरन्तराः शरौघेण कृताः केचिद्रणाजिरे ॥ ५९ ॥
सेनानुकारिणः प्राणान्मुमुचुस्त्रिदशार्दनाः ॥
केषांचिद्बाहवश्छिन्नाश्छिन्नग्रीवास्तथापरे ॥ ६० ॥
शिरांसि पेतुरन्येषामन्ये मध्ये विदारिताः ॥
विच्छिन्नजंघास्त्वपरे पेतुरुर्व्यां महासुराः ॥ ६१ ॥

और कितनेक तो हृदयमें शूलसे विदीर्ण करके पृथ्वीमें डालदिये और कितनेक रणभूमिमें शरोंके समूहसे छेदडाले ॥ ५९ ॥ देवताओंको पीडा देनेवाले वे सेनाके अनुकारी कितनेक असुर प्राणोंको छोडते भये और कितनेक असुरोंकी भुजाएँ कटगईं और कितनेकोंकी ग्रीवाएँ कटगईं ॥ ६० ॥ कितनेकोंके शिर काटकर डालदिये कितनेक बीचसे विदीर्ण करदिये कितनेक महा असुरोंकी जंघाएँ काटकर पृथ्वीपर डालदिये ॥ ६१ ॥

एकबाह्वक्षिचरणाः केचिद्देव्या द्विधा कृताः ॥
छिन्नेऽपि चान्ये शिरसि पतिताः पुनरुत्थिताः॥६२॥
कबन्धा युयुधुर्देव्या गृहीतपरमायुधाः ॥
ननृतुश्चापरे तत्र युद्धे तूर्यलयाश्रिताः ॥ ६३ ॥
कबन्धाश्छिन्नशिरसः खड्गशक्त्यृष्टिपाणयः ॥
तिष्ठतिष्ठेति भाषन्तो देवीमन्ये महासुराः ॥ ६४ ॥

देवीने कितनेक असुरोंके एकएकहीं भुजा नेत्र और चरण जिनमें ऐसे

दोदो टुकड़े करडाले और कितनेक असुर शिरकटनेसे पृथ्वीपर गिर-कर फिर उठ खड़ेहुए ॥ ६२ ॥ शस्त्र हाथमें लिये कितनेक कबंध ( रुंड ) देवीके साथ युद्ध करनेलगे और कितनेक असुर युद्धमें तूर्य बाजेकी तालके साथ नाचनेलगे ॥ ६३ ॥ खड्ग शक्ति और ऋष्टि हैं हाथमें जिनके ऐसे शिरकटेहुए कितनेक महा असुरोंके कबंध (रुंड) ठहर २ ऐसे दूरपड़े मुखोंसे पुकारनेलगे ॥ ६४ ॥

पातितै रथनागाश्वैरसुरैश्च वसुन्धरा ॥
अगम्या साऽभवत्तत्र यत्राभूत्स महारणः ॥ ६५ ॥
शोणितौघा महानद्यः सद्यस्तत्र विसुस्रुवुः ॥
मध्ये चासुरसैन्यस्य वारणासुरवाजिनाम् ॥ ६६ ॥
क्षणेन तन्महासैन्यमसुराणां तथाऽम्बिका ॥
निन्ये क्षयं यथा वह्निस्तृणदारुमहाचयम् ॥ ६७ ॥

जहाँ यह ऐसा महा रण हुवा वहाँ वह भूमि पडेहुए रथ, हस्ती, घोडे और असुरों करके अगम्य अर्थात् जहां कोई न चलसके ऐसी होगई ॥ ६५ ॥ और असुरसेनाके बीचसे हस्ती, असुर और घोड़ोंके रुधिरके समूहकी शीघ्र अनेक नदियाँ बह चलीं ॥६६॥ इस प्रकार उस असुरोंकी महा सेनाको वह अंबिका क्षणमें ऐसे नष्ट करती भई कि जैसे तृण काष्ठके बड़े समूहको अग्नि नष्ट कर डालता है ॥ ६७ ॥

स च सिंहो महानादमुत्सृजन्धुतकेसरः ॥
शरीरेभ्योऽमरारीणामसूनिव विचिन्वति ॥ ६८ ॥
देव्या गणैश्च तैस्तत्र कृतं युद्धं तथासुरैः ॥
यथैषां तुतुषुर्देवाः पुष्पवृष्टिमुचो दिवि ॥ ६९ ॥

इति मार्कण्डेयपुराणे सावर्णिके मन्वन्तरे देवीमाहात्म्ये महिषासुरसैन्यवधो नाम द्वितीयोऽध्यायः ॥ २ ॥

सटा ( कँधवालों ) को कँपाताहुवा और बडा नाद ( शब्द ) करताहुवा वह सिंह असुरोंके शरीरोंसे मानों प्राणोंको ही ढूंढरहाहै ॥ ६८ ॥ वहां देवीके गणोंने जब उन असुरोंके साथ युद्ध किया तब प्रसन्नहुए देवता आकाशमें पुष्पोंकी वर्षा करनेलगे ॥ ६९ ॥ इति श्रीमार्कण्डेयपुराणे सावर्णिके मन्वन्तरे देवीमाहात्म्ये पंडितनंदलालकृत भाषाटीकायां महिषासुरसैन्यवधो नाम द्वितीयोऽध्यायः॥२॥

---

अथ तृतीय अध्यायः ।

ऋषिरुवाच ॥ १ ॥

निहन्यमानं तत्सैन्यमवलोक्य महासुरः ॥
सेनानीश्चिक्षुरः कोपाद्ययौ योद्धुमथाम्बिकाम् ॥ २ ॥
स देवीं शरवर्षेण ववर्ष समरेऽसुरः ॥
यथा मेरुगिरेः शृंगं तोयवर्षेण तोयदः ॥ ३ ॥
तस्य छित्त्वा ततो देवी लीलयैव शरोत्करान् ॥
जघान तुरगान्बाणैर्यन्तारं चैव वाजिनाम् ॥ ४ ॥

ऋषि कहनेलगे ॥१॥ महिषासुरकी सेनाका अधिपति यह चिक्षुर नाम महा असुर उस सेनाको नष्ट होतीहुई देखकर क्रोधसे देवीके साथ युद्ध करनेको गया ॥ २ ॥ उस युद्धमें वह असुर देवीके ऊपर ऐसे शरोंकी वर्षा करनेलगा कि सुमेरुके शृंगपर मेघ जैसे जलकी वर्षा करताहै ॥३॥ इसके अनंतर देवी अपनी लीलासे ही चिक्षुरके बाणोंके समूहोंको अपने बाणोंसे काटकर उसके घोडे और घोड़ोंके सारथिको मारती भई ॥ ४ ॥

चिच्छेद च धनुः सद्यो ध्वजं चातिसमुच्छ्रितम् ॥
विव्याध चैव गात्रेषु छिन्नधन्वानमाशुगैः ॥ ५ ॥
स छिन्नधन्वा विरथो हताश्वो हतसारथिः ॥
अभ्यधावत तां देवीं खड्गचर्मधरोऽसुरः ॥ ६ ॥
सिंहमाहत्य खड्गेन तीक्ष्णधारेण मूर्धनि ॥
आजघान भुजे सव्ये देवीमप्यतिवेगवान् ॥ ७ ॥

और शीघ्रही बाणोंसे धनुषको तथा अत्यंत ऊँची ध्वजाको छेदन करतीभई और कटाहै धनुष जिसका ऐसे चिक्षुर नाम असुरके अंगोंको बाणोंसे बेधतीभई ॥ ५ ॥ पश्चात् जब चिक्षुरका धनुष कटगया, रथ टूटगया, घोड़े मारेगए और सारथी मारागया तब वह असुर तलवार और ढाल लेकर उस देवीके सन्मुख दौडा ॥ ६ ॥ और तीक्ष्णधारवाले अपने खड्गसे सिंहके मस्तकमें प्रहार कर अत्यंत बेगसे इसने देवीकी बाईं भुजापर तलवारी मारी ॥ ७ ॥

तस्याः खड्गो भुजं प्राप्य पफाल नृपनन्दन ॥
ततो जग्राह शूलं स कोपादरुणलोचनः ॥ ८ ॥
चिक्षेप च ततस्तत्तु भद्रकाल्यां महासुरः ॥
जाज्वल्यमानं तेजोभी रविबिम्बमिवाम्बरात् ॥ ९ ॥
दृष्ट्वा तदापतच्छूलं देवी शूलममुञ्चत ॥
तच्छूलं शतधा तेन नीतं स च महासुरः ॥ १० ॥

हे राजन्! वह खड्ग देवीकी भुजापर लगकर फटगया तब क्रोधसे लाल नेत्र करके इसने त्रिशूल लिया ॥ ८ ॥ और तिसके अनंतर इस महा असुरने भद्रकाली देवीकी तरफ फेंका तब तेजकरके जाज्वल्यमान (अत्यंत जलता हुवा) सूर्यके समान अंबरसे पडताहुवा उस त्रि-

शूलको देखकर देवीने अपना त्रिशूल छोडा इस देवीके त्रिशूलने असुरके त्रिशूलके सौ टुकड़े करडाले और यह महा असुरकोभी मारडाला ॥ ९ ॥ १० ॥

हते तस्मिन्महावीर्ये महिषस्य चमूपतौ ॥
आजगाम गजारूढश्चामरस्त्रिदशार्दनः ॥ ११ ॥
सोऽपि शक्तिं मुमोचाथ देव्यास्तामम्बिका द्रुतम् ॥
हुंकाराभिहतां भूमौ पातयामास निष्प्रभाम् ॥ १२ ॥
भग्नां शक्तिं निपतितां दृष्ट्वा क्रोधसमन्वितः ॥
चिक्षेप चामरः शूलं बाणैस्तदपि साऽच्छिनत् ॥ १३ ॥

महिषासुरकी सेनाका नायक वह महापराक्रमी चिक्षुरको जब मारडाला तब देवताओंको दुःखदेनेवाला चामर नाम असुर हाथीपर सवार होकर आया ॥११॥ और उसने भी देवीके ऊपर शक्ति छोडी वह शीघ्र ही अंबिकाने हुंकारशब्दसे कांतिहीन कर पृथ्वीमें गिरादिया ॥ १२ ॥ टूटकर गिरीहुई शक्तिको देखकर चामर असुर क्रोधसे पूर्ण होगया और अपना त्रिशूल छोडा वहभी भगवतीने बाणोंसे छेदन करडाला ॥ १३ ॥

ततः सिंहः समुत्पत्य गजकुम्भान्तरे स्थितः ॥
बाहुयुद्धेन युयुधे तेनोच्चैस्त्रिदशारिणा ॥ १४ ॥
युध्यमानौ ततस्तौ तु तस्मान्नागान्महीं गतौ ॥
युयुधातेऽतिसंरब्धौ प्रहारैरतिदारुणैः ॥ १५ ॥
ततो वेगात्खमुत्पत्य निपत्य च मृगारिणा ॥
करप्रहारेण शिरश्चामरस्य पृथक् कृतम् ॥ १६ ॥

इसके अनंतर भगवतीका सिंह कूदकर हस्तीपर जाबैठा और देवता-

चक्र, गदा, शार्ङ्ग धनुष और खड्ग इनको हाथोंमें लेकर वैष्णवी शक्ति आई ॥ १८ ॥ और यज्ञवाराह अतुलरूपको धारण करनेवाले हरि भगवान्की वाराही शक्ति वराहका शरीर धारण करके आई ॥ १९ ॥

नारसिंही नृसिंहस्य बिभ्रती सदृशं वपुः ॥
प्राप्ता तत्र सटाक्षेपक्षिप्तनक्षत्रसंहतिः ॥ २० ॥
वज्रहस्ता तथैवैन्द्री गजराजोपरि स्थिता ॥
प्राप्ता सहस्रनयना यथा शक्रस्तथैव सा ॥ २१ ॥
ततः परिवृतस्ताभिरीशानो देवशक्तिभिः ॥
हन्यन्तामसुराः शीघ्रं मम प्रीत्याह चण्डिकाम् २२

और अपने सटा (कँधवालके बालों) करके हिलायाहै नक्षत्रगण जिसने ऐसी नृसिंहसदृश शरीर धारणकिये नृसिंहकी शक्ति नारसिंही वहां प्राप्त हुई ॥ २० ॥ और वज्र हाथमें लिये, गजराज ( ऐरावत ) के ऊपर स्थित, सहस्रनेत्रोंवाली और इंद्रकेसे सुरूपवाली ऐसी इंद्रकी शक्ति ऐंद्रही वहां आकर प्राप्तहुई ॥२१॥ फिर इन देवशक्तियोंसे युक्त हुए महादेवजी चंडिकाको कहनेलगे कि मेरी प्रसन्नताके लिये असुरोको शीघ्र मारो ॥ २२ ॥

ततो देवीशरीरात्तु विनिष्क्रान्तातिभीषणा ॥
चण्डिका शक्तिरत्युग्रा शिवाशतनिनादिनी ॥२३॥
सा चाह धूम्रजटिलमीशानमपराजिता ॥
दूत त्वं गच्छ भगवन्पार्श्वं शुम्भनिशुम्भयोः २४
ब्रूहि शुम्भं निशुम्भं च दानवावतिगर्वितौ ॥
ये चान्ये दानवास्तत्र युद्धाय समुपस्थिताः॥२५॥

तिसके अनंतर देवीके शरीरसे अत्यंत भयंकर अत्यंत उग्र रूपवाली,

सैकडों शिवाओं ( गीदडियों ) के समान शब्द करनेवाली ऐसी चंड़िका शक्ति निकली ॥२३॥ और इस अपराजिताने धूम्रवर्णकी जटावाले शिवसे कहा कि हे भगवन्! मेरी तरफसे दूत होकर शुंभ और निशुंभके पास जाओ ॥२४॥ और अत्यंत गर्वितहुए शुंभ तथा निशुंभ दानवोंको और जो युद्धके लिये वहां अन्य दानव उपस्थितहैं उनको यह कहो कि ॥ २५ ॥

त्रैलोक्यमिन्द्रो लभतां देवाः सन्तु हविर्भुजः ॥
यूयं प्रयात पातालं यदि जीवितुमिच्छथ ॥ २६ ॥
बलावलेपादथ चेद्भवन्तो युद्धकांक्षिणः ॥
तदाऽगच्छत तृप्यन्तु मच्छिवाः पिशितेन वः ॥२७॥

जो तुम अपने जीवकी इच्छा करतेहो तौ त्रैलोक्यका राज्य इंद्रको मिलजाय और देवता यज्ञोंके भोगनेवाले होजायँ और तुम पातालको चलेजाओ ॥२६॥ और जो तुम बलके गर्वसे युद्धकी इच्छा करतेहो तौ फिर मेरे सन्मुख आओ तुम्हारे मांससे मेरी योगिनियां तृप्त होवेंगी ॥ २७ ॥

यतो नियुक्तो दौत्येन तया देव्या शिवः स्वयम् ॥
शिवदूतीतिलोकेऽस्मिंस्ततः साख्यातिमागता॥२८॥
तेऽपि श्रुत्वा वचो देव्याः शर्वाख्यातं महासुराः ॥
अमर्षापूरिता जग्मुर्यत्र कात्यायनी स्थिता॥२९॥
ततः प्रथममेवाग्रे शरशक्त्यृष्टिवृष्टिभिः ॥
ववर्षुरुद्धतामर्षास्तां देवीममरारयः ॥ ३० ॥

जिससे उस देवीने स्वयं शिवजीको दूतकार्यपर नियुक्त किया इस लिये इस लोकमें वह "शिवदूती" ऐसा नामसे विख्यात हुई॥२८॥

वे महा असुर भी ऐसा महादेवजीका कहाहुवा देवीका वचन सुनकर क्रोधसे पूरित होगए और जहां वह कात्यायनी स्थित थी वहां गये ॥ २९ ॥ इसके अनंतर बढाहै क्रोध जिनके ऐसे वे असुर पहले ही उस देवीके आगे बाण,शक्ति और ऋष्टि इनकी वर्षाएँ करनेलगे॥३०॥

सा च तान्प्रहितान्बाणाञ्छूलशक्तिपरश्वधान् ॥
चिच्छेद लीलयाध्मातधनुर्मुक्तैर्महेषुभिः ॥ ३१ ॥
तस्याग्रतस्तथा काली शूलपातविदारितान् ॥
खट्वाङ्गपोथितांश्चारीन्कुर्वती व्यचरत्तदा ॥३२॥
कमण्डलुजलाक्षेपहतवीर्यान्हतौजसः ॥
ब्रह्माणी चाकरोच्छत्रून्येन येन स्म धावति ॥३३॥

उस देवीने भी फेंकेहुए वे बाण,त्रिशूल, शक्ति और फरसे खेंचेहुए धनुषसे छुटे बडे २ बाणोंकरके लीलासे ही काटडाले ॥३१॥ और उस कालमें काली भगवती तैसे ही उस देवीके आगे शत्रुवोंको त्रिशूलसे विदीर्ण करतीहुई और खट्वांगसे कुचलतीहुई चारोंतरफ विचरनेलगी ॥३२॥ और ब्रह्माणी जिधर २ दोड़ती थी उधर २ कमंडलके जलके डालनेसे शत्रुवोंको नष्टवीर्यवाले और नष्टतेजवाले करदेती थी ॥ ३३ ॥

माहेश्वरी त्रिशूलेन तथा चक्रेण वैष्णवी ॥
दैत्याञ्जघान कौमारी तथा शक्त्यातिकोपना ३४
ऐन्द्रीकुलिशपातेन शतशो दैत्यदानवाः ॥
पेतुर्विदारिताः पृथ्व्यां रुधिरौघप्रवर्षिणः ॥ ३५ ॥
तुण्डप्रहार विध्वस्ता दंष्ट्राग्रक्षतवक्षसः ॥
वाराहमूर्त्या न्यपतंश्चक्रेण च विदारिताः ॥ ३६ ॥

इसी प्रकार माहेश्वरी त्रिशूल करके, वैष्णवी चक्रकरके और अत्यंत कोपवाली कौमारी शक्तिकरके दैत्योंको मारतीभई ॥ ३४ ॥ और ऐंद्रीने भी वज्रके प्रहारसे रुधिरके प्रवाहोंकी वर्षा करतेहुए सैंकड़ों दैत्य दानव पृथ्वीपर सुलादिये ॥ ३५ ॥ और वाराहीके तुंडप्रहारसे विध्वस्तहुए और दंष्ट्राओंके अग्रभागसे विदीर्ण छातीवाले हुए और चक्रसें विदीर्ण हुए दैत्य पृथ्वीपर पड़ते भये ॥ ३६ ॥

नखैर्विदारितांश्चान्यान्भक्षयन्ती महासुरान् ॥
नारसिंही चचाराजौ नादापूर्णदिगन्तरा ॥ ३७ ॥
चण्डाट्टहासैरसुराः शिवदूत्यभिदूषिताः ॥
पेतुः पृथिव्यां पतितांस्तांश्चखादाथ सा तदा ॥ ३८ ॥

और अपने शब्दसे पूरित किया है दिशाओंका मध्यभाग जिसने ऐसी नारसिंही भगवती कितनेक महाअसुरोंको नखोंसे विदीर्ण करती हुई और कितनेकोंको भक्षण करतीहुई युद्धभूमिमें बिचरनेलगी॥३७॥ शिवदूतीके प्रचंड अट्टहंसनोंसे मूर्च्छितहुए असुर पृथ्वीपर पड़नेलगे और उन पड़ेहुवोंको चंडिका उस कालमें भक्षण करनेलगी ॥ ३८ ॥

इति मातृगणं क्रुद्धं मर्दयन्तं महासुरान् ॥
दृष्ट्वाभ्युपायैर्विविधैर्नेशुर्देवारिसैनिकाः ॥ ३९ ॥
पलायनपरान्दृष्ट्वा दैत्यान्मातृगणार्दितान् ॥
योद्धुमभ्याययौ क्रुद्धो रक्तबीजो महासुरः ॥ ४० ॥
रक्तबिन्दुर्यदा भूमौ पतत्यस्य शरीरतः ॥
समुत्पतति मेदिन्यास्तत्प्रमाणस्तदासुरः ॥ ४१ ॥

इस प्रकार अनेक उपायोंसे महा असुरोंको मर्दन करता हुवा क्रुद्ध उस मातृगण ( देवी समूह ) को देखकर असुरोंकी सेनाएँ नष्ट

होनेलगी ॥ ३९ ॥ फिर मातृगणसे पीडितहुए दैत्योंको भागते हुए देखकर क्रुद्ध हुवा महा असुर रक्तबीज युद्ध करनेको सन्मुख आया ॥ ४० ॥ शस्त्रके लगनेसे जब इस रक्तबीजके शरीरसे रक्तकी बूँद पृथ्वीपर गिरती थी तब शरीर और बलकरके वैसे ही प्रमाणवाला असुर पृथ्वीसे उत्पन्न होताथा ॥ ४१ ॥

युयुधे च गदापाणिरिन्द्रशक्त्या महासुरः ॥
ततश्चैन्द्री स्ववज्रेण रक्तबीजमताडयत् ॥ ४२ ॥
कुलिशेनाहतस्याशु बहु सुस्राव शोणितम् ॥
समुत्तस्थुस्ततो योधास्तद्रूपास्तत्पराक्रमाः ॥ ४३ ॥
यावन्तः पतितास्तस्य शरीराद्रक्तबिन्दवः ॥
तावन्तः पुरुषा जातास्तद्वीर्यबलविक्रमाः ॥ ४४ ॥

गदा लेकर वह महाअसुर रक्तबीज जब ऐंद्रीके साथ युद्ध करने लगा तब ऐंद्री शक्तिने अपने वज्रसे यह बहुत ताडित किया ॥ ॥ ४२ ॥ वज्रके लगनेसे जब उसके शरीरसे बहुत रुधिर गिरा तब उससे रक्तबीज कैसे रूपवाले और रक्तबीज केसे पराक्रमवाले योद्धा उत्पन्न हुए ॥ ४३ ॥ उस रक्तबीजके शरीरसे जितनी रक्तकी बूंदें पड़ती भई उतने ही पुरुष रक्तबीजकेसे वीर्य, बल और पराक्रमवाले उत्पन्न होते भये ॥ ४४ ॥

ते चापि युयुधुस्तत्र पुरुषा रक्तसंभवाः ॥
समं मातृभिरत्युग्रशस्त्रपातातिभीषणम् ॥ ४५ ॥
पुनश्च वज्रपातेन क्षतमस्य शिरो यदा ॥
ववाह रक्तं पुरुषास्ततो जाताः सहस्रशः ॥ ४६ ॥

और वे रक्तसे उत्पन्न हुए पुरुष भी उग्र शस्त्रोंकी वर्षा करते हुए

माताओं ( देवियों ) के साथ युद्ध करते भये ॥ ४५ ॥ फिर ऐंद्री शक्तिने जब वज्रके प्रहारसे इस रक्तबीजका शिर काटदिया तब उससे जो रक्त वहा उससे हजारहाँ पुरुष उत्पन्न हुए ॥ ४६ ॥

वैष्णवी समरे चैनं चक्रेणाभिजघान ह ॥
गदया ताडयामास ऐन्द्री तमसुरेश्वरम् ॥४७॥
वैष्णवी चक्रभिन्नस्य रुधिरस्रावसंभवैः ॥
सहस्रशो जगद्व्याप्तं तत्प्रमाणैर्महासुरैः ॥ ४८ ॥

और उस युद्धमें इस असुरेश्वरको वैष्णवी चक्रसे प्रहार करती भई और ऐंद्री गदासे ताडित करतीभई ॥ ४७ ॥ फिर वैष्णवीके चक्रसे कटेहुए उस महाअसुरके शरीरसे रुधिर बहनेके कारण वैसेही प्रमाणवाले हजारहां महाअसुर उत्पन्न हुए और उन असुरोंसे जगत् व्याप्त होगया ॥ ४८ ॥

शक्त्या जघान कौमारी वाराही च तथाऽसिना ॥
माहेश्वरी त्रिशूलेन रक्तबीजं महासुरम् ॥ ४९ ॥
स चापि गदया दैत्यः सर्वा एवाहनत्पृथक् ॥
मातृः कोपसमाविष्टो रक्तबीजो महासुरः ॥५०॥
तस्याहतस्य बहुधा शक्तिशूलादिभिर्भुवि ॥
पपात यो वै रक्तौघस्तेनासञ्छतशोऽसुराः ॥५१॥

फिर कौमारीने शक्तिसे, वाराहीने खड्गसे और माहेश्वरीने त्रिशूलसे उस महाअसुर रक्तबीजके ऊपर प्रहार किया ॥ ४९ ॥ फिर क्रोधसे युक्तहुवा वह दितिका पुत्र महाअसुर रक्तबीज भी संपूर्ण माताओंको पृथक् २ गदासे मारता भया ॥ ५० ॥ शक्ति, त्रिशूल आदिकोंकरके बहुत प्रकारके प्रहारोंसे जब यह असुर ताडित किया

तब पृथ्वीपर जो रक्तका समूह पड़ा उससे सैंकड़ों असुर उत्पन्न होतेभये ॥ ५१ ॥

तैश्चासुरासृक्संभूतैरसुरैः सकलं जगत् ॥
व्याप्तमासीत्ततो देवा भयमाजग्मुरुत्तमम् ॥५२॥
तान्विषण्णान्सुरान्दृष्ट्वा चण्डिका प्राह सत्वरा ॥
उवाच कालीं चामुण्डे विस्तीर्णं वदनं कुरु ॥५३॥
मच्छस्त्रपातसंभूतान् रक्तबिन्दून्महासुरान् ॥
रक्तबिन्दोः प्रतीच्छ त्वं वक्त्रेणानेन वेगिना ॥५४॥

रुधिरसे उत्पन्नहुए उन असुरों करके जब संपूर्ण जगत् व्याप्त होगया तब उससे देवता भयको प्राप्त हुए ॥ ५२ ॥ उन असुरोंको डरेहुए देखकर उतावलवाली चंडिका प्रथम देवताओंको बोलकर फिर कालीसे कहनेलगी कि हे चामुंडे ! अपने मुखको विस्तारवाला अर्थात् बडा कर ॥ ५३ ॥ और मेरे शस्त्राघातसे उत्पन्नहुए रक्तबिंदुवोंको और रक्तबिंदुवोंसे उत्पन्नहुए महा असुरोंको इस अपने विस्तारवाले मुखसे शीघ्र ग्रहण करतीजावो ॥ ५४ ॥

भक्षयन्ती चर रणे तदुत्पन्नान् महासुरान् ॥
एवमेष क्षयं दैत्यः क्षीणरक्तो गमिष्यति ॥ ५५ ॥
भक्ष्यमाणास्त्वया चोग्रा न चोत्पत्स्यन्ति चापरे॥
इत्युक्त्वा तां ततो देवी शूलेनाभिजघान तम् ५६

और इससे उत्पन्नहुए महाअसुरोंको भक्षण करतीहुई रणमें विचर इस प्रकार रक्त क्षीण होनेसे यह दैत्य नष्ट होजायगा ॥५५॥ तुह्मारे भक्षण करतेहुए अन्य उग्र महाअसुर उत्पन्न नहीं होवेंगे. कालीको ऐसे कहकर पश्चात् चंडिका देवी उस रक्तबीजको त्रिशूलसे घायल करतीभई ॥ ५६ ॥

मुखेन काली जगृहे रक्तबीजस्य शोणितम् ॥
ततोऽसावाजघानाथ गदया तत्र चण्डिकाम् ॥५७॥
न चास्या वेदनां चक्रे गदापातोऽल्पिकामपि ॥
तस्याहतस्य देहात्तु बहु सुस्राव शोणितम् ॥ ५८ ॥

इस प्रकार काली अपने मुखसे रक्तबीजके रुधिरको ग्रहण करतीभई. तिसके अनंतर यह रक्तबीज अपनी गदाकरके जब चंडिकाके ऊपर प्रहार करता भया ॥५७॥ तब इस चंडिकाके गदाके प्रहारसे कुछ भी पीडा नहीं हुई और इस प्रहारकिये रक्तबीजके शरीरसे तो बहुत रुधिर गिरनेलगा ॥ ५८ ॥

यतस्ततस्तद्वक्त्रेण चामुण्डा संप्रतीच्छति ॥
मुखे समुद्गता येऽस्या रक्तपातान्महासुराः ॥ ५९ ॥
तांश्चखादाथ चामुण्डा पपौ तस्य च शोणितम् ॥
देवी शूलेन वज्रेण बाणैरसिभिर्ऋष्टिभिः ॥ ६० ॥
जघान रक्तबीजं तं चामुण्डा पीतशोणितम् ॥
स पपात महीपृष्ठे शस्त्रसंघसमाहतः ॥ ६१ ॥
नीरक्तश्च महीपाल रक्तबीजो महासुरः ॥
ततस्ते हर्षमतुलमवापुस्त्रिदशा नृप ॥ ६२ ॥

उसको चारोंतरफसे चामुंडा अपने मुख करके ग्रहण करतीभई और चामुंडाके मुखमें रक्त गिरनेसे जो महाअसुर उत्पन्न हुए ॥५९॥ उनको तौ यह चामुंडा खातीभई और रक्तबीजके रुधिरको पीती भई. चामुंडाने पियाहै रुधिर जिसका ऐसे उस रक्तबीजको शूल,वज्र,बाण, तलवार और ऋष्टि इन शस्त्रोंसे देवी मारती भई.हे राजन् ! फिर शस्त्रसमूहसे प्रहार कियाहुवा और रुधिरसे वर्जितहुवा यह महाअसुर रक्त-

बीज पृथ्वीपर गिरपडा. हे राजन् ! उसके पृथ्वीपर पडनेसे देवता प्रसन्न हुए ॥ ६० ॥ ६१ ॥ ६२ ॥

तेषां मातृगणो जातो ननर्तासृङ्मदोद्धतः ॥ ६३ ॥

इति मार्कण्डे० सावर्णिके० देवीमाहात्म्ये रक्तबीजवधो नामाष्टमोऽध्यायः ॥ ८ ॥

और उन देवताओंसे उत्पन्न हुवा देवियोंका गण असुरोंका रुधिर पीनेसे उद्धत होकर नृत्य करनेलगा ॥ ६३ ॥

इति श्रीमार्कंडेयपुराणे सावर्णिके मन्वंतरे देवीमाहात्म्ये पंडितनंदलालकृतभाषाटीकायां रक्तबीजवधो नामाष्टमोऽध्यायः ॥ ८ ॥

---

अथ नवम अध्यायः ।

राजोवाच ॥ १ ॥

विचित्रमिदमाख्यातं भगवन्भवता मम ॥
देव्याश्चरितमाहात्म्यं रक्तबीजवधाश्रितम् ॥ २ ॥
भूयश्चेच्छाम्यहं श्रोतुं रक्तबीजे निपातिते ॥
चकार शुम्भो यत्कर्म निशुम्भश्चातिकोपनः ॥ ३ ॥

राजा कहनेलगा ॥ १ ॥ हे राजन् ! रक्तबीजके वधपूर्वक यह देवीके चरितका माहात्म्य आपने मुझसे विचित्र कहा ॥२॥ किंतु फिर मैं सुननेकी इच्छा करताहूं कि रक्तबीजके मरनेके पश्चात् अत्यंत कोपवाला शुंभ और निशुंभ जो कर्म करता भया वह कहो ॥३॥

ऋषिरुवाच ॥ ४ ॥

चकार कोपमतुलं रक्तबीजे निपातिते ॥
शुम्भासुरो निशुम्भश्च हतेष्वन्येषु चाहवे ॥ ५ ॥
हन्यमानं महासैन्यं विलोक्यामर्षमुद्वहन् ॥

अभ्यधावन्निशुम्भोऽथ मुख्ययाऽसुरसेनया ॥ ६ ॥
तस्याग्रतस्तथा पृष्ठे पार्श्वयोश्च महासुराः ॥
संदष्टौष्ठपुटाः क्रुद्धा हन्तुं देवीमुपाययुः ॥ ७ ॥

ऋषि कहनेलगे ॥४॥ रक्तबीजके मारेजानेपर और अन्य असुरोंके मारेजानेपर शुंभ और निशुंभ युद्धमें अत्यंत क्रोध करतेभये ॥५॥ फिर बडी सेनाको मरीहुई देखकर क्रुद्धहुवा निशुंभ असुरोंकी मुख्य सेना लेकर देवीके सन्मुख दौडा ॥६॥ और इसके साथ ही आगे और पीछे तथा दोनों पसवाडोंमें क्रोधसे होंठ चबातेहुए महाअसुर देवीके मारनेके लिये चले ॥ ७ ॥

आजगाम महावीर्यः शुम्भोऽपि स्वबलैर्वृतः ॥
निहन्तुं चण्डिकां कोपात्कृत्वा युद्धं तु मातृभिः ॥८॥
ततो युद्धमतीवासीद्देव्याः शुम्भनिशुम्भयोः ॥
शरवर्षमतीवोग्रं मेघयोरिव वर्षतोः ॥ ९ ॥
चिच्छेदास्ताञ्छरांस्ताभ्यां चण्डिका स्वशरोत्करैः ॥
ताडयामास चाङ्गेषु शस्त्रौघैरसुरेश्वरौ ॥ १० ॥

और महापराक्रमवाला शुंभ भी अपनी सेनाओंको साथ लेकर क्रोधसे देवियोंके साथ युद्ध करके चंडिकाको मारनेके लिये आया ॥ ॥ ८ ॥ फिर वर्षा करते हुए मेघोंकी तरह अत्यंत तीक्ष्ण बाणोंकी वर्षा करते हुए शुंभ और निशुंभका देवीके साथ घोर युद्ध होने लगा॥ ॥ ९ ॥ शुंभ निशुंभके छोडे हुए शरोंको चंडिका अपने बाणोंके समूहोंसे छेदन करती भई और शस्त्रोंके समूहोंसे चंडिका उन असुरेश्वरोंको अंग २ में बीधती भई ॥ १० ॥

निशुम्भो निशितं खड्गं चर्म चादाय सुप्रभम् ॥
अताडयन्मूर्ध्नि सिंहं देव्या वाहनमुत्तमम् ॥ ११ ॥

ताडिते वाहने देवी क्षुरप्रेणासिमुत्तमम् ॥
निशुम्भस्याशु चिच्छेद चर्म चाप्यष्टचन्द्रकम् १२
छिन्ने चर्माणि खड्गे च शक्तिं चिक्षेप सोऽसुरः ॥
तामप्यस्य द्विधा चक्रे चक्रेणाभिमुखागताम् ॥ १३॥

फिर निशुंभ दैत्य तीक्ष्ण खड्ग और चमकती हुई ढालको लेकर दौड़ा और देवीके उत्तम वाहन सिंहके मस्तकमें प्रहार किया ॥११॥ ऐसे वाहन ताडित होनेपर देवीने क्षुरप्र शस्त्रसे निशुंभकी उत्तम तलवार और अष्टचंद्रक ढाल शीघ्र काटडाले ॥ १२ ॥ ऐसे ढाल और तलवार कटनेपर निशुंभने शक्ति फेंकी, सन्मुख आतीहुईके उसके भी देवीने चक्रसे दो टुकडे करडाले ॥ १३ ॥

कोपाध्मातो निशुम्भोऽथ शूलं जग्राह दानवः ॥
आयातं मुष्टिपातेन देवी तच्चाप्यचूर्णयत् ॥ १४॥
आविध्याथ गदां सोऽपि चिक्षेप चण्डिकां प्रति ॥
साऽपि देव्या त्रिशूलेन भिन्ना भस्मत्वमागता॥१५
ततः परशुहस्तं तमायान्तं दैत्यपुंगवम् ॥
आहत्य देवी बाणौघैरपातयत भूतले ॥ १६ ॥

फिर क्रोधसे जलते हुए निशुंभ दानवने त्रिशूल ग्रहण करा उसका भी मूकेके प्रहारसे देवीने चुर २ करडाला ॥ १४ ॥ फिर निशुंभने गदाको घुमाकर चंडिकाके प्रति फेंकी वह भी देवीने त्रिशूलसे तोड़कर भस्म कर दई ॥ १५ ॥ फिर फरसा हाथमें लेकर आतेहुए उस दैत्येश्वरको देवी बाणोंके समूहोंसे मारकर पृथ्वीमें गिराती भई ॥१६॥

तस्मिन्निपतिते भूमौ निशुम्भे भीमविक्रमे ॥
भ्रातर्यतीव संक्रुद्धः प्रययौ हन्तुमम्बिकाम् ॥ १७॥

स रथस्थस्तथाऽत्युच्चैर्गृहीतपरमायुधैः ॥
भुजैरष्टाभिरतुलैर्व्याप्याशेषं बभौ नभः ॥ १८ ॥

जब भयंकर पराक्रमवाला निशुंभ भ्राता मारकर पृथ्वीमें गिरादिया तब अत्यंत क्रुद्ध हुवा शुंभ अंबिकाके मारनेके लिये दौडा ॥ ॥ १७॥ रथमें बैठा हुवा वह शुंभ धारण कियेहैं परम आयुध जिनमें ऐसी लंबी पराक्रमवाली आठ भुजाओंसे संपूर्ण आकाशको व्याप्त करके स्थित हुवा ॥ १८ ॥

तमायान्तं समालोक्य देवी शङ्खमवादयत् ॥
ज्याशब्दं चापि धनुषश्चकारातीव दुःसहम् ॥ १९ ॥
पूरयामास ककुभो निजघण्टास्वनेन च ॥
समस्तदैत्यसैन्यानां तेजोवधविधायिना ॥ २० ॥
ततः सिंहो महानादैस्त्याजितेभमहामदैः ॥
पूरयामास गगनं गां तथैव दिशो दश ॥ २१ ॥

आताहुवा उस शुंभको देखकर देवीने शंख बजाया और अत्यंत दुःसह धनुषकी प्रत्यंचाका टंकोर शब्द किया ॥ १९ ॥ और संपूर्ण दैत्योंकी सेनाके तेजको नष्ट करनेवाला अपनी घंटाके शब्दसे दशोंदिशाएँ पूरित करदीं ॥ २० ॥ तिसके अनंतर दूर कियाहै हस्तियोंका महामद जिनने ऐसे सिंहने अपने घोर शब्दोंकरके आकाश, पृथ्वी और दशोंदिशाएँ पूरित करदीं ॥ २१ ॥

ततः काली समुत्पत्य गगनं क्ष्मामताडयत् ॥
कराभ्यां तन्निनादेन प्राक्स्वनास्ते तिरोहिताः ॥२२
अट्टाट्टहासमशिवं शिवदूती चकार ह ॥
तैः शब्दैरसुरास्त्रेसुः शुम्भः कोपं परं ययौ ॥ २३ ॥

दुरात्मंस्तिष्ठ तिष्ठेति व्याजहाराम्बिका यदा ॥
तदा जयेत्यभिहितं देवैराकाशसंस्थितैः ॥ २४ ॥

फिर आकाशमें उछलकर कालीने दोनों हाथ पृथ्वीपर दे मारे उनके शब्दसे पहले होनेवाले संपूर्ण शब्द ढके गये अर्थात् यह हाथोंका शब्द सबके ऊपर बढकर रहा ॥ २२ ॥ फिर शिव दूतीने असुरोंको दुःख उत्पन्न करनेवाला अट्टाट्टहास किया. उन शब्दोंसे संपूर्ण असुरतो त्रासको प्राप्त होगये और शुंभ परम क्रोधको प्राप्त हुवा ॥ २३ ॥ फिर अंबिकाने " रे दुष्ट ! तू ठहर २ " जब ऐसा कहा तब आकाशमें स्थित हुए देवताओंने " जय २ " ऐसा शब्द कहा ॥ २४ ॥

शुम्भेनागत्य या शक्तिर्मुक्ता ज्वालाऽतिभीषणा ॥
आयान्ती वह्निकूटाभासा निरस्ता महोल्कया २५
सिंहनादेन शुम्भस्य व्याप्तं लोकत्रयान्तरम् ॥
निर्घातनिःस्वनो घोरो जितवानवनीपते ॥ २६ ॥
शुम्भमुक्ताञ्छरान्देवी शुम्भस्तत्प्रहितांछरान् ॥
चिच्छेद स्वशरैरुग्रैः शतशोऽथ सहस्रशः ॥ २७ ॥
ततः सा चण्डिका क्रुद्धा शूलेनाभिजघान तम् ॥
स तदाभिहतो भूमौ मूर्च्छितो निपपात ह ॥ २८ ॥

फिर ज्वालाओंसे अत्यंत भयंकर जो शक्ति शुंभने आकर छोडी उस अग्निके पर्वतके समान आतीहुईको देखकर देवीने अपनी महोल्का नामवाली शक्तिसे काटडाली ॥ २५ ॥ हे राजन् ! फिर शुंभके सिंहसमान शब्दसे जब तीनों लोक व्याप्त होगये तब आकाशमें निर्घातका ऐसा घोर शब्द हुवा कि वह शुंभका शब्द उनसे जीतलिया ॥२६॥ फिर शुंभके छोडेहुए सैकडों हजारों बाण देवीने अपने उग्र बाणोंसे

और देवीके छोडेहुए सैकडों हजारों बाण शुंभने अपने उग्र बाणोंसे आपसमें काटडाले ॥ २७ ॥ फिर क्रुद्धहुई चंडिकाने अपने त्रिशूलसे जब इस शुंभको मारा तब यह मूर्छित होकर पृथ्वीपर गिरपड़ा॥२८॥

ततो निशुम्भः संप्राप्य चेतनामत्तकार्मुकः ॥
आजघान शरैर्देवीं कालीं केसरिणं तथा ॥ २९ ॥
पुनश्च कृत्वा बाहूनामयुतं दनुजेश्वरः ॥
चक्रायुधेन दितिजश्छादयामास चण्डिकाम् ॥३०॥
ततो भगवती क्रुद्धा दुर्गा दुर्गार्तिनाशिनी ॥
चिच्छेद तानि चक्राणि स्वशरैस्सायकांश्च तान् ३१

फिर निशुंभ दैत्य मूर्छा हटनेपर धनुष लेकर आया और बाणोंसे काली देवीको तथा सिंहको उसने घायल करदिया ॥२९॥ फिर इस दितिके पुत्र दनुजेश्वरने दश हजार भुजाएँ धारण करके चक्र आयुधोंसे देवीको आच्छादित करदिया ॥ ३० ॥ इसके अनंतर क्रुद्धहुई संकट-नाशिनी दुर्गा भगवतीने अपने बाणोंसे वे निशुंभके चक्र और बाण सब काटदिये ॥ ३१ ॥

ततो निशुम्भो वेगेन गदामादाय चण्डिकाम् ॥
अभ्यधावत वै हन्तुं दैत्यसेनासमावृतः ॥ ३२ ॥
तस्यापतत एवाशु गदां चिच्छेद चण्डिका ॥
खड्गेन शितधारेण स च शूलं समाददे ॥ ३३ ॥
शूलहस्तं समायान्तं निशुम्भममरार्दनम् ॥
हृदि विव्याध शूलेन वेगाविद्धेन चण्डिका ॥ ३४ ॥

फिर दैत्यसेनासे युक्तहुवा निशुंभ गदाको लेकर चंडिकाके मारनेके लिये बडे वेगसे दौडा ॥३२॥ फिर चंडिकाने अपने तीक्ष्ण धा-

खाले खड्गसे उस आतेहुएही निशुंभकी गदा शीघ्र काटडाली तब निशुंभने शीघ्रही त्रिशूल धारण करलिया ॥ ३३ ॥ त्रिशूल हाथमें लिये देवताओंको पीडा करनेवाला आता हुवाही यह निशुंभको चंडिकाने वेगसे लियेहुए अपने त्रिशूलसे हृदयमें घायल करदिया ॥३४॥

भिन्नस्य तस्य शूलेन हृदयान्निःसृतोऽपरः ॥
महाबलो महावीर्यस्तिष्ठेति पुरुषोऽवदन् ॥ ३५ ॥
तस्य निष्क्रामतो देवी प्रहस्य स्वनवत्ततः ॥
शिरश्चिच्छेद खड्गेन ततोऽसावपतद्भुवि ॥ ३६ ॥
ततः सिंहश्चखादोग्रदंष्ट्राक्षुण्णशिरोधरान् ॥
असुरांस्तांस्तथा काली शिवदूती तथाऽपरान्॥३७॥

त्रिशूलसे भिन्नहुएके उसके हृदयसे महाबल और महापराक्रमवाला एक दूसरा पुरुष "ठहर" ऐसा चंडिकासे कहताहुवा निकला ॥३५॥ फिर अट्टाट्टहास करके देवीने इस निकलतेहुएका ही शिर अपने खड्गसे काटडाला. शिर काटते ही यह पृथ्वीपर गिरपडा ॥३६॥ फिर अपनी उग्रडाढोंसे चिकलीहैं ग्रीवाएँ (नाड) जिनकी ऐसे उन असुरोंको सिंह भक्षण करनेलगा तथा अन्य कितनेकोंको काली और शिवदूती भक्षण करनेलगी ॥ ३७ ॥

कौमारीशक्तिनिर्भिन्नाः केचिन्नेशुर्महासुराः ॥
ब्रह्माणीमन्त्रपूतेन तोयेनान्ये निराकृताः ॥ ३८ ॥
माहेश्वरीत्रिशूलेन भिन्नाः पेतुस्तथापरे ॥
वाराहीतुण्डघातेन केचिच्चूर्णीकृता भुवि ॥ ३९ ॥

और कितनेकमहाअसुर तो कौमारीकी शक्तिसे विदीर्णहुए नष्ट होगये और कितनेक ब्रह्माणीके मंत्रसे पवित्रहुए जल करके नष्ट हो-

गये ॥ ३८ ॥ कितनेक माहेश्वरीके त्रिशूलसे विदीर्णहुए पृथ्वीपर गिरपड़े और कितनेक वाराहीका तुंडके प्रहारोंसे चूर्ण २ होकर पृथ्वीपर गिरपडे ॥ ३९ ॥

खण्डं खण्डं च चक्रेण वैष्णव्या दानवाः कृताः ॥
वज्रेण चैन्द्रीहस्ताग्रविमुक्तेन तथापरे ॥ ४० ॥
केचिद्विनेशुरसुराः केचिन्नष्टा महाहवात् ॥
भक्षिताश्चापरे कालीशिवदूतीमृगाधिपैः ॥ ४१ ॥

इति मार्कण्डेयपुराणे सावर्णिके मन्वन्तरे देवीमाहात्म्ये निशुम्भवधो नाम नवमोऽध्यायः ॥ ९ ॥

फिर कितनेक दानवोंको वैष्णवीने अपने चक्रसे टुकडे२ करडाले और कितनेक दानवोंको ऐंद्रीने अपने वज्रसे टुकडे २ करडाले ॥ ४० ॥ घोर युद्ध होनेके कारण कितनेक आप ही मरगये और कितनेक शस्त्रोंसे मरगये और बाकी बचे कितनेक दानवोंको काली, शिवदूती और सिंह इनोंने भक्षण करलिये ॥ ४१ ॥

इति श्रीमार्कंडेयपुराणे सावर्णिके मन्वंतरे देवीमाहात्म्ये पंडितनंदलालकृतभाषाटीकायां निशुंभवधो नाम नवमोऽध्यायः ॥ ९ ॥

---

## अथ दशम अध्यायः ।

### ऋषिरुवाच ॥ १ ॥

निशुम्भं निहतं दृष्ट्वा भ्रातरं प्राणसंमितम् ॥
हन्यमानं बलं चैव शुम्भः क्रुद्धोऽब्रवीद्वचः ॥ २ ॥
बलावलेपाद्दुष्टे त्वं मा दुर्गे गर्वमावह ॥
अन्यासां बलमाश्रित्य युद्ध्यसे याऽतिमानिनी ॥ ३ ॥

ऋषि कहनेलगे ॥ १ ॥ कि प्राणोंके तुल्य निशुंभ भ्राताको मराहुवा देखकर और सेनाको नष्ट होतीहुई देखकर क्रुद्धहुवा शुंभ वचन कहनेलगा ॥२॥ हे दुष्टे! हे दुर्गे! तू बलके अहंकारसे गर्व मत कर! क्योंकि तू औरोंके बलके आश्रित होकर अत्यंत अभिमानवाली हुई युद्ध करती है ॥ ३ ॥

देव्युवाच ॥ ४ ॥

एकैवाहं जगत्यत्र द्वितीया का ममापरा ॥
पश्यैता दुष्ट मय्येव विशन्त्यो मद्विभूतयः ॥५॥
ततः समस्तास्ता देव्यो ब्रह्माणीप्रमुखा लयम् ॥
तस्या देव्यास्तनौ जग्मुरेकैवासीत्तदाम्बिका ॥६॥

देव्युवाच ॥ ७ ॥

अहं विभूत्या बहुभिरिह रूपैर्यदा स्थिता ॥
तत्संहृतं मयैकैव तिष्ठाम्याजौ स्थिरो भव ॥८॥

देवी कहनेलगी ॥४॥ हे दुष्ट! मैं एक ही हूँ यहां जगतमें मेरेसे दूसरी और कौनहै अर्थात् कोई नहीं और देख ये सब मेरी शक्तियां मुझमें ही प्रविष्ट होती हैं ॥ ५ ॥ फिर ब्रह्माणीसे आदि लेकर वे संपूर्ण देवियां उस देवीके शरीरमें जब लीन होगईं तब अकेली अंबिका ही शेष रहगई ॥६॥ देवी कहनेलगी ॥७॥ कि मैं अपनी विभूतिकरके जिन बहुत रूपोंसे स्थितथी अब वे रूप अपनेमें खेंचकर मैं युद्धमें अकेली स्थित हूं तू ठहर ॥ ८ ॥

ऋषिरुवाच ॥ ९ ॥

ततः प्रववृते युद्धं देव्याः शुम्भस्य चोभयोः ॥
पश्यतां सर्वदेवानामसुराणां च दारुणम् ॥ १० ॥

शरवर्षैः शितैः शस्त्रैस्तथास्त्रैश्चैव दारुणैः ॥
तयोर्युद्धमभूद्भूयः सर्वलोकभयंकरम् ॥ ११ ॥

ऋषि कहनेलगे ॥ ९ ॥ फिर संपूर्ण देवताओं और असुरोंके देखते हुए देवी और शुंभ इन दोनोंका बडा दारुण युद्ध प्रवृत्त हुवा ॥ १० ॥ बाणोंकी वर्षाओंकरके और तीक्ष्ण शस्त्रों करके तथा दारुण अस्त्रोंकरके संपूर्ण लोकोंको भय करनेवाला देवी और शुंभका युद्ध फिर होनेलगा ॥ ११ ॥

दिव्यान्यस्त्राणि शतशो मुमुचे यान्यथाम्बिका ॥
बभञ्ज तानि दैत्येन्द्रस्तत्प्रतीघातकर्तृभिः ॥१२॥
मुक्तानि तेन चास्त्राणि दिव्यानि परमेश्वरी ॥
बभञ्ज लीलयैवोग्रहुंकारोच्चारणादिभिः ॥ १३ ॥
ततः शरशतैर्देवीमाच्छादयत सोऽसुरः ॥
साऽपि तत्कुपिता देवी धनुश्चिच्छेद चेषुभिः ॥१४॥

अंबिका जिन २ सैकडों दिव्य अस्त्रोंको छोडती भई उन २ को यह दैत्येंद्र शुंभ उन २ शस्त्रोंके काटनेवाले शस्त्रोंकरके काटता भया ॥ १२ ॥ और शुंभने जो दिव्य अस्त्र छोडे वे देवीने हुंकार उच्चारण आदिकोंकरके लीलासे ही काटडाले ॥ १३ ॥ फिर उस असुरने जब सौ बाणोंकरके देवीको आच्छादित करदिया तब कुपित हुई देवीने भी बाणोंसे शुंभका धनुष काटडाला ॥ १४ ॥

छिन्ने धनुषि दैत्येन्द्रस्तथा शक्तिमथाददे ॥
चिच्छेद देवी चक्रेण तामप्यस्य करे स्थिताम् १५
ततः खड्गमुपादाय शतचन्द्रं च भानुमत् ॥
अभ्यधावत्तदा देवीं दैत्यानामधिपेश्वरः ॥ १६ ॥

तस्यापतत एवाशु खड्गं चिच्छेद चण्डिका ॥
धनुर्मुक्तैः शितैर्बाणैश्चर्म चार्ककरामलम् ॥ १७ ॥

फिर जब धनुष काटडाला तब दैत्येंद्रने शक्ति ग्रहण किया हाथमें ही धारण करी हुई वह शक्ति भी देवीने अपने चक्रसे काटडाली ॥ ॥ १५ ॥ फिर दैत्योंका अधिपेश्वर शुंभ खड्ग और चमकती हुई ढाल लेकर देवीकी तरफ दौड़ा ॥ १६ ॥ चंडिकाने आते आते ही शुंभका खड्ग अपने धनुषसे छोडे हुए तीक्ष्ण बाणोंकरके शीघ्र काटडाला और सूर्यके किरणोंके समान स्वच्छ ढाल भी काटडाली ॥ १७ ॥

हताश्वः स तदा दैत्यश्छिन्नधन्वा विसारथिः ॥
जग्राह मुद्गरं घोरमम्बिकानिधनोद्यतः ॥ १८ ॥
चिच्छेदापततस्तस्य मुद्गरं निशितैः शरैः ॥
तथापि सोऽभ्यधावत्तां मुष्टिमुद्यम्य वेगवान् ॥१९॥
स मुष्टिं पातयामास हृदये दैत्यपुंगवः ॥
देव्यास्तं चापि सा देवी तलेनोरस्यताडयत् ॥२०॥

जब उस दैत्यका घोडा मरगया, धनुष टूटगया और सारथी मरगया तब अंबिकाके मारनेमें उद्यतहुवा इसने घोर मुद्गर लिया ॥ ॥१८॥ इस आते आतेकाही मुद्गर देवीने तीक्ष्ण बाणोंसे काटडाला, फिर भी वेगवाला यह शुंभ घूंसा तैयार करके देवीके सन्मुख दौडा ॥ १९ ॥ और वह घूंसा इस दैत्येश्वरने देवीके हृदयमें मारा देवीने भी उसकी छातीमें थप्पड़का प्रहार किया ॥ २० ॥

तलप्रहाराभिहतो निपपात महीतले ॥
स दैत्यराजः सहसा पुनरेव तथोत्थितः ॥ २१ ॥
उत्पत्य च प्रगृह्योच्चैर्देवीं गगनमास्थितः ॥
तत्रापि सा निराधारा युयुधे तेन चण्डिका ॥ २२ ॥

थप्पडसे माराहुआ वह दैत्यराज पृथ्वीपर गिरपड़ा और फिर भी शीघ्र उठ खडा होगया ॥ २१ ॥ फिर वह देवीको पकड और उछलकर आकाशमें जाय स्थित हुवा वहाँ भी निराधार वह चंडिका उस दैत्यके साथ युद्ध करने लगी ॥ २२ ॥

नियुद्धं खे तदा दैत्यश्चण्डिका च परस्परम् ॥
चक्रतुः प्रथमं युद्धं मुनिविस्मयकारकम् ॥ २३ ॥
ततो नियुद्धं सुचिरं कृत्वा तेनाम्बिका सह ॥
उत्पाट्य भ्रामयामास चिक्षेप धरणीतले ॥ २४ ॥
स क्षिप्तो धरणीं प्राप्य मुष्टिमुद्यम्य वेगितः ॥
गम्यधावत दुष्टात्मा चण्डिकानिधनेच्छया ॥२५॥

तब आकाशमें प्रथम तो सिद्ध, मुनियोंको आश्चर्य करानेवाला दैत्य और चंडिकाका आपसमें बाहुयुद्ध हुवा ॥ २३ ॥ फिर उस दैत्यके साथ बहुत कालतक बाहुयुद्ध करके प्रथम इसको आकाशमें घुमाया फिर पृथ्वीपर फेंकदिया ॥ २४ ॥ पृथ्वीपर फेंकाहुवा यह दुष्टात्मा दैत्य पृथ्वीपर प्राप्त होकर घूंसा बनाकर झट उठा और चंडिका के मारनेके लिये सन्मुख दौडा ॥ २५ ॥

तमायान्तं ततो देवी सर्वदैत्यजनेश्वरम् ॥
जगत्यां पातयामास भित्वा शूलेन वक्षसि ॥ २६ ॥
स गतासुः पपातोर्व्यां देवीशूलाग्रविक्षतः ॥
चालयन्सकलां पृथ्वीं साब्धिद्वीपां सपर्वताम् ॥२७॥
ततः प्रसन्नमखिलं हते तस्मिन्दुरात्मनि ॥
जगत्स्वास्थ्यमतीवाप निर्मलं चाभवन्नभः ॥ २८ ॥

फिर चंडिका देवीने उस आयेहुए सर्व दैत्यजनोंके ईश्वर शंभुको

त्रिशूलसे हृदयमें विदीर्ण करके पृथ्वीमें गिरा दिया ॥ ३६ ॥ देवीके त्रिशूलसे घायलहुवा हुवा यह दैत्य जब प्राणोंको त्यागकर पृथ्वीपर पडा तब समुद्र, द्वीप, और पर्वतों समेत संपूर्ण पृथ्वी कांपने लगगई॥ ॥ २७ ॥ फिर इस दुष्टात्माके मरनेसे संपूर्ण जगत प्रसन्न होकर स्वस्थ होगया और आकाश निर्मल होगया ॥ २८ ॥

उत्पातमेघाः सोल्का ये प्रागासंस्ते शमं ययुः ॥
सरितो मार्गवाहिन्यस्तथासंस्तत्र पातिते ॥ २९ ॥
ततो देवगणाः सर्वे हर्षनिर्भरमानसाः ॥
बभूवर्निहते तस्मिन् गन्धर्वा ललितं जगुः ॥ ३० ॥
अवादयंस्तथैवान्ये ननृतुश्चाप्सरोगणाः ॥
ववुः पुण्यास्तथा वाताः सुप्रभोऽभूद्दिवाकरः ॥३१॥
जज्वलुश्चाग्नयःशान्ताःशान्तादिग्जनितस्वनाः३२
इति मार्कण्डेयपुराणे सावर्णिके मन्वन्तरे-देवीमाहात्म्ये शुम्भवधो नाम दशमोऽध्यायः ॥ १० ॥

और प्रथम जो उत्पातके मेघ तथा उल्कापात हुए थे वे शांत होगये और इसके मरनेसे प्रथमकीतरह नदियां मार्गमें बहनेवाली होगईं॥ ॥ २९ ॥ और उसके मरनेसे संपूर्ण देवगण बडा हर्षित होगया और गंधर्व सुंदर गान करनेलगे॥ ३०॥और अन्य गंधर्व बाजे बजानेलगे अप्सराओंके गण नृत्य करनेलगे, शीतल मंद सुगंध वायु चलनेलगा और सूर्यकी कांति स्वच्छ होगई ॥ ३१ ॥ यज्ञ आदिकोंका अग्नि प्रज्वलित होनेलगा और दिशाओंमें शांत २ शब्द होनेलगे ॥ ३२ ॥

इति श्रीमार्कंडेयपुराणे सावर्णिके मन्वतरे देवीमाहात्म्ये पंडितनंदलालकृतभाषाटीकायां दशमोऽध्यायः ॥ ० ॥

## अथ एकादशः अध्यायः

ऋषिरुवाच ॥ १ ॥

देव्याहते तत्र महासुरेन्द्रे सेन्द्राः सुरा वह्निपुरोगमस्ताम् ॥ कात्यायनीं तुष्टुवुरिष्टलाभाद्विकासिवक्त्राब्जविकासिताशाः ॥ २ ॥

देवि प्रपन्नार्तिहरे प्रसीद प्रसीद मातर्जगतोऽखिलस्य ॥ प्रसीद विश्वेश्वरि पाहि विश्वं त्वमीश्वरी देवि चराचरस्य ॥ ३ ॥

ऋषि कहने लगे ॥ १ ॥ कि वहां देवीने जब महाअसुरेंद्र मारडाला तब इष्टफलका लाभ होजानेके कारण खिले हुए मुखारविंदोंसे प्रकाशित करी हैं दिशाएँ जिनने ऐसे इंद्रसहित देवता उस कात्यायनी भगवतीकी स्तुति करने लगे ॥ २ ॥ हे शरणागतोंके दुःख हरनेवाली हे देवि ! तुम प्रसन्न होओ, हे संपूर्ण जगत्की माता तुम प्रसन्न होओ, हे विश्वकी ईश्वरी तुम प्रसन्न होओ और विश्वकी रक्षाकरो. क्यों कि जिससे हे देवि ! तुम चर और अचर जगत्की ईश्वरी हो॥३॥

आधारभूता जगतस्त्वमेका महीस्वरूपेण यतः स्थितासि ॥ अपां स्वरूपस्थितया त्वयैतदाप्यायते कृत्स्नमलंघ्यवीर्ये ॥ ४ ॥

त्वं वैष्णवी शक्तिरनन्तवीर्या विश्वस्य बीजं परमासि माया ॥ संमोहितं देवि समस्तमेतत्त्वं वै प्रसन्ना भुवि मुक्तिहेतुः ॥ ५ ॥

विद्याः समस्तास्तव देवि भेदाः स्त्रियः समस्ताः

सकला जगत्सु ॥ त्वयैकया पूरितमम्बयैतत्का ते स्तुतिः स्तव्यपरा परोक्तिः ॥ ६ ॥

संपूर्ण जगत्की तुम एक आधारभूत हो क्योंकि जिससे तुम पृथ्वीरूप हो और हे अतुलपराक्रमवाली ! जलस्वरूप स्थित होनेके कारण तुमसे यह जगत् व्याप्त होरहाहै ॥४॥ हे देवि ! अनंतपराक्रमवाली विष्णुकी शक्ति तुम हो और विश्वका बीज हो, परम माया हो और यह संपूर्ण जगत् तुमने ही मोहित कररक्खा है पृथ्वीपर प्रसन्न हुई मुक्तिकी कारण तुम ही हो ॥ ५ ॥ हे देवि ! जो संपूर्ण विद्याएँ हैं और जो संपूर्ण स्त्रियां हैं वे संपूर्ण तुह्मारे ही भेद हैं और वह संपूर्ण जगत तुझ एक अंबाकरके ही पूरित होरहा है स्तुतिसे परे जो तुम हो तुह्मारी यह क्या स्तुति है अर्थात् थोडी ही स्तुति है क्योंकि जिससे आप परम उक्तिरूप ही हो ॥ ६ ॥

सर्वभूता यदा देवी स्वर्गमुक्तिप्रदायिनी ॥
त्वं स्तुता स्तुतये का वा भवन्ति परमोक्तयः ॥७॥
सर्वस्य बुद्धिरूपेण जनस्य हृदि संस्थिते ॥
स्वर्गापवर्गदे देवि नारायणि नमोऽस्तु ते ॥ ८ ॥

और संपूर्ण प्राणिरूप, स्वर्ग और मुक्तिकी देनेवाली तुम जो स्तुत भी कीजावो तो फिर तुह्मारी स्तुतिके लिये ऐसी कौन परम उक्ति है अर्थात् कोई भी उक्ति नहीं ॥७॥ हे संपूर्ण जनोंके हृदयमें बुद्धिरूपसे स्थित होनेवाली ! हे स्वर्ग, मोक्षको देनेवाली ! हे देवि ! हे नारायणि ! तुझको नमस्कार है ॥ ८ ॥

कलाकाष्ठादिरूपेण परिणामप्रदायिनि ॥
विश्वस्योपरतौ शक्ते नारायणि नमोऽस्तु ते ॥९॥
सर्वमंगलमाङ्गल्ये शिवे सर्वार्थसाधिके ॥

शरण्ये त्र्यम्बके गौरि नारायणि नमोऽस्तु ते ॥१०॥
सृष्टिस्थितिविनाशानां शक्तिभूते सनातनि ॥
गुणाश्रये गुणमये नारायणि नमोऽस्तु ते ॥ ११ ॥

हे कला काष्ठा आदि रूपकरके प्राणियोंका अंत करनेवाली ! हे विश्वके उपरामके लिये शक्तिरूप ! हे नारायणि ! तुझको नमस्कार है ॥ ९ ॥ हे संपूर्ण मंगलोंके मंगलस्वरूपवाली ! हे शिवे ! हे संपूर्ण अर्थों ( प्रयोजनों ) के सिद्धकरनेवाली ! हे शरण देनेवाली ! हे तीन नेत्रोंवाली ! हे गौरि ! हे नारायणि ! तुझको नमस्कार है ॥ १० ॥ हे सृष्टि, स्थिति और बिनाशकी शक्तिरूप ! हे सनातनि ! हे गुणाश्रये ! हे गुणमये ! हे नारायणि ! तुझको नमस्कार है ॥ ११ ॥

शरणागतदीनार्तपरित्राणपरायणे ॥
सर्वस्यार्तिहरे देवि नारायणि नमोऽस्तु ते ॥ १२ ॥
हंसयुक्तविमानस्थे ब्रह्माणीरूपधारिणि ॥
कौशांभःक्षरिके देवि नारायणि नमोऽस्तु ते ॥१३॥
त्रिशूलचन्द्राहिधरे महावृषभवाहिनि ॥
माहेश्वरीस्वरूपेण नारायणि नमोऽस्तु ते ॥ १४ ॥

हे शरणागत दीनोंको दुःखसे रक्षा करनेमें तत्पर ! हे संपूर्णोंकी पीडा हरनेवाली ! हे देवि ! हे नारायणि ! तुझको नमस्कार है ॥१२॥ हे हंसयुक्त विमानमें बैठनेवाली ! हे ब्रह्माणीका रूप धारणकरनेवाली ! हे कुशाओंके जलको छिडकनेवाली ! हे देवि ! हे नारायणि ! तुझको नमस्कार है ॥१३॥ हे महेश्वरी स्वरूपसे त्रिशूल, चंद्रमा और सर्पोंको धारणकरनेवाली ! हे महावृषभवाहनवाली ! हे नारायणि ! तुझको नमस्कारहै ॥ १४ ॥

मयूरकुक्कुटवृते महाशक्तिधरेऽनघे ॥
कौमारीरूपसंस्थाने नारायणि नमोऽस्तु ते ॥१५॥
शङ्खचक्रगदाशार्ङ्गगृहीतपरमायुधे ॥
प्रसीद वैष्णवीरूपे नारायणि नमोऽस्तु ते ॥ १६ ॥
गृहीतोग्रमहाचक्रे दंष्ट्रोद्धृतवसुन्धरे ॥
वराहरूपिणि शिवे नारायणि नमोऽस्तु ते ॥१७॥
नृसिंहरूपेणोग्रेण हन्तुं दैत्यान्कृतोद्यमे
त्रैलोक्यत्राणसहिते नारायणि नमोऽस्तु ते ॥१८॥

हे मयूर कुक्कुटोंसे युक्त ! हे महाशक्तिको धारणकरनेवाली ! हे अनघे ! हे कौमारीरूपसे भूषित ! हे नारायणि ! तुझको नमस्कार है॥ ॥ १५ ॥ हे शंख, चक्र, गदा, धनुष परम आयुधोंकी धारण करनेवाली ! हे वैष्णवरूप ! हे नारायणि ! हमारे ऊपर प्रसन्न होओ-तुझको नमस्कार है ॥ १६ ॥ हे भयंकर महाचक्रोंको धारण करनेवाली ! हे दंष्टासे पृथ्वीको धारण करनेवाली ! हे वाराहरूपिणि ! हे शिवे ! हे नारायणि ! तुझको नमस्कारहै ॥ १७ ॥ हे उग्र नृसिंहरूपसे दैत्योंके मारनेमें उद्यमवाली ! हे त्रिलोकीकी रक्षा करनेवाली ! हे नारायणि ! तुझको नमस्कारहै ॥ १८ ॥

किरीटिनी महावज्रे सहस्रनयनोज्ज्वले ॥
वृत्रप्राणहरे चैन्द्रि नारायणि नमोऽस्तु ते ॥१९॥
शिवदूतिस्वरूपेण हतदैत्यमहाबले ॥
घोररूपे महारावे नारायणि नमोऽस्तु ते ॥ २० ॥
दंष्ट्राकरालवदने शिरोमालाविभूषणे ॥
चामुण्डे मुण्डमथने नारायणि नमोऽस्तु ते ॥२१॥

हे किरीटवाली ! हे महाव्रजवाली ! हे सहस्रनयनोंसे उज्ज्वल ! हे वृत्रासुरके प्राण हरनेवाली ! हे ऐंद्रि ! हे नारायणि ! तुझको नमस्कार है॥ ॥ १९ ॥ हे शिवदूतीस्वरूपसे दैत्योंके महाबलको नष्टकरनेवाली ! हे घोररूपवाली ! हे महाशब्दवाली ! हे नारायणि ! तुझको नमस्कार है ॥२०॥ हे द्रष्टाओंसे भयंकर मुखवाली ! हे मुंडमालासे विभूषित ! हे चामुंडे ! हे मुंडदैत्यको नष्टकरनेवाली ! हे नारायणि तुझको नमस्कार है ॥ २१ ॥

लक्ष्मि लज्जे महाविद्ये श्रद्धे पुष्टि स्वधे ध्रुवे ॥
महारात्रि महाविद्ये नारायणि नमोऽस्तु ते ॥ २२ ॥
मेधे सरस्वति वरे भूति बाभ्रवि तामसि ॥
नियते त्वं प्रसीदेशे नारायणि नमोऽस्तु ते ॥२३॥

हे लक्ष्मि ! हे लज्जारूपिणि ! हे महाविद्यारूपिणि ! हे श्रद्धारूपिणि ! हे पुष्टिरूपिणि ! हे स्वधारूपिणि ! हे निश्चलरूपिणि ! हे महारात्रिरूपिणि ! हे महाविद्ये ! हे नारायणि तुझको नमस्कार है ॥२२॥ हे मेधा ( बुद्धि ) रूपिणि ! हे सरस्वति ! हे वरे ! हे सत्वगुणवाली ! हे रजोगुणवाली ! हे तमोगुणवाली ! हे निश्चले ! हे ईशे ! तुम प्रसन्न होओ, हे नारायणि ! तुझको नमस्कार है ॥ २३ ॥

सर्वस्वरूपे सर्वेशे सर्वशक्तिसमन्विते ॥
भयेभ्यस्त्राहि नो देवि दुर्गे देवि नमोऽस्तु ते ॥२४॥
एतत्ते वदनं सौम्यं लोचनत्रयभूषितम् ॥
पातु नः सर्वभीतिभ्यः कात्यायनि नमोऽस्तु ते२५
ज्वालाकरालमत्युग्रमशेषासुरसूदनम् ॥
त्रिशूलं पातु नो भीतेर्भद्रकालि नमोऽस्तु ते ॥२६॥

हे सर्वस्वरूपवाली ! हे सर्वकी ईश्वरि ! हे सर्वशक्तियुक्त ! हे देवि ! हमारी भयसे रक्षा करो. हे दुर्गे ! हे देवि ! तुझको नमस्कार है ॥२४॥ हे कात्यायनि ! तीन नेत्रोंसे भूषित यह तेरा सौम्य मुख संपूर्ण प्राणियोंसे हमारी रक्षा करो. तुझको नमस्कार है ॥२५॥ ज्वालासे भयंकर, अतिउग्र और संपूर्ण असुरोंको नष्ट करनेवाला ऐसा तुह्मारा त्रिशूल भयसे हमारी रक्षा करो. हे भद्रकालि ! तुझको नमस्कार है ॥ २६ ॥

हिनस्ति दैत्यतेजांसि स्वनेनापूर्य यो जगत् ॥
सा घण्टा पातु नो देवि पापेभ्यो नःसुतानिव २७
असुरासृग्वसापङ्कचर्चितस्ते करोज्ज्वलः ॥
शुभाय खड्गो भवतु चण्डिके त्वां नतावयम्॥२८॥

हे देवि ! जो तुह्मारी घंटा अपने शब्दसे इस जगतको पूरित करके दैत्योंके तेजको नष्ट करती है वह घंटा पापोंसे पुत्रके समान हमारी रक्षा करो ॥२७॥ और हे चंडिके ! असुरोंके रुधिर चर्बीरूप कीचसे चर्चित किरणोंसे उज्ज्वल ऐसा तुह्मारा खड्ग हमारा कल्याण करो. हम तुझको नमस्कार करते हैं ॥ २८ ॥

रोगानशेषानपहंसि तुष्टा रुष्टा तु कामान्सकलानभीष्टान्॥ त्वामाश्रितानां न विपन्नराणां त्वामाश्रिता ह्याश्रयतां प्रयान्ति ॥ २९ ॥
एतत्कृतं यत्कदनं त्वयाऽद्य धर्मद्विषां देवि महासुराणाम् ॥ रूपैरनेकैर्बहुधात्ममूर्तिं कृत्वाऽम्बिके तत्प्रकरोति काऽन्या ॥ ३० ॥

हे देवि ! तुम प्रसन्न हुई संपूर्ण रोगोंको नष्टकर देती हो और रुष्ट-हुई संपूर्ण वांछित कामनाओंको नष्ट कर देती हो और जो मनुष्य

तेरे आश्रित रहते हैं उनको कभी विपत् नहीं पडती है और तेरे आश्रित हुए जन अन्य जनोंको आश्रय देते हैं ॥२९॥ हे देवि ! अनेकरूपोंसे बहुत प्रकारकी मूर्तियां धारण करके धर्मके शत्रु इन महाअसुरोंको जो यह वध आपने किया हे अंबिके ! ऐसा क्या कोई अन्य स्त्री कर सकती है ? अर्थात् नहीं करसकती ॥ ३० ॥

विद्यासु शास्त्रेषु विवेकदीपेष्वाद्येषु वाक्येषु च का त्वदन्या ॥ ममत्वगर्तेऽतिमहान्धकारे विभ्रामयत्येतदतीव विश्वम् ॥ ३१ ॥
रक्षांसि यत्रोग्रविषाश्च नागा यत्रारयो दस्युबलानि यत्र ॥ दावानलो यत्र तथाब्धिमध्ये तत्र स्थिता त्वं परिपासि विश्वम् ॥ ३२ ॥

और चतुर्दशविद्या, षड्शास्त्र और चार वेद ये ज्ञानके प्रकाशनेमें दीपकरूप होनेपर भी महाघोर अंधकार है जिसमें ऐसे ममतारूप गढेमें इस विश्व (जगत) को तुझसे अन्य (दूसरी) और कौन अत्यंत भ्रमाती है अर्थात् तुम ही भ्रमातीहो॥३१॥ और जहां राक्षस हैं, जहां उग्र विषवाले सर्प हैं,जहां शत्रु हैं जहां चोरोंका समुदाय है और जहां दावानलहै वहां और समुद्रके मध्यमें स्थित होकर इस विश्वकी तुम पालना करतीहो ॥ ३२ ॥

विश्वेश्वरि त्वं परिपासि विश्वं विश्वात्मिका धारयसीति विश्वम् ॥ विश्वेशवन्द्या भवती भवन्ति विश्वाश्रया ये त्वयि भक्तिनम्राः ॥ ३३ ॥
देवि प्रसीद परिपालय नोऽरिभीतेर्नित्यं यथाऽसुरवधादधुनैव सद्यः ॥ पापानि सर्वजगतां प्रशमं

नयाशु उत्पातपाकजनितांश्च महोपसर्गान् ॥ ३४
प्रणतानां प्रसीद त्वं देवि विश्वार्तिहारिणि ॥
त्रैलोक्यवासिनामीड्ये लोकानां वरदा भव ॥३५॥

हे देवि ! विश्वकी ईश्वरी तुम विश्वकी पालना करतीहो और विश्वकी आत्मा तुम विश्वको धारण करतीहो, इसीलिये ब्रह्मा, विष्णु, महेशआदिकोंकरके तुम वंदना करी जाती हो और जो जन तुह्मारी भक्तिविषे नम्र हैं वे विश्वको आश्रय देनेवाले होते हैं ॥३३॥ हे देवि! तुम प्रसन्नहोओ और असुरोंको मारके जैसे अब शीघ्र हमारी रक्षा करी है ऐसे शत्रुवोंके भयसे नित्य हमारी रक्षा करो और संपूर्ण जगत्के पापोंको तथा उत्पातोंके होनेसे उत्पन्न हुए महामारी आदि उपद्रवोंको शीघ्र शांत करो ॥ ३४ ॥ हे देवि ! हे जगतकी पीडाको हरनेवाली ! प्रणतजनोंके ऊपर प्रसन्न होओ और हे त्रैलोक्यमें वसनेवालोंकी पूज्य ! तुम लोगोंको वर देनेवाली होओ ॥ ३५ ॥

देव्युवाच ॥ ३६ ॥

वरदाऽहं सुरगणा वरं यन्मनसेच्छथ ॥
तं वृणुध्वं प्रयच्छामि जगतामुपकारकम् ॥ ३७ ॥

देवा ऊचुः ॥ ३८ ॥

सर्वबाधाप्रशमनं त्रैलोक्स्याखिलेश्वरी ॥
एवमेव त्वया कार्यमस्मद्वैरिविनाशनम् ॥ ३९ ॥

देवि कहने लगी ॥ ३६ ॥ कि हे देवगण ! मैं वरदेनेवाली हूं तुह्मारे मनमें जगत्का उपकार करनेवाला जिस वरकी इच्छा है वही मांगो मैं देती हूं ॥ ३७ ॥ देवता कहनेलगे ॥ ३८ ॥ हे संपूर्णोंकी ईश्वरि ! त्रैलोक्यकी संपूर्ण पीडाओंको शांतकरनेवाला हमारे शत्रुवोंका नाश करनेवाला ऐसे हो तुमको करना चाहिये ॥ ३९ ॥

देव्युवाच ॥ ४० ॥

वैवस्तेऽन्तरे प्राप्ते अष्टाविंशतिमे युगे ॥
शुम्भो निशुम्भश्चैवान्यावुत्पत्स्येते महासुरौ ॥४१॥
नन्दगोपगृहे जाता यशोदागर्भसंभवा ॥
ततस्तौ नाशयिष्यामि विन्ध्याचलनिवासिनी ४२

देवी कहने लगी ॥ ४० ॥ कि वैवस्वत मन्वंतरमें जब अट्ठाइसवां युग आवेगा तब दूसरे महाअसुर शुंभ और निशुंभ उत्पन्न होवेंगे ॥ ॥ ४१ ॥ फिर नंदगोपके घरमें यशोदाके गर्भसे मैं उत्पन्न होकर और विन्ध्याचलमें निवास करके उन शुंभ और निशुंभको नष्ट करूंगी ॥ ४२ ॥

पुनरप्यतिरौद्रेण रूपेण पृथिवीतले ॥
अवतीर्य हनिष्यामि वैप्रचित्तांस्तु दानवान् ॥४३॥
भक्षयन्त्याश्च तानुग्रान्वैप्रचित्तान्महासुरान् ॥
रक्ता दन्ता भविष्यन्ति दाडिमीकुसुमोपमाः॥४४॥
ततो मां देवताः स्वर्गे मर्त्यलोके च मानवाः ॥
स्तुवन्तो व्याहरिष्यन्ति सततं रक्तदन्तिकाम् ॥४५॥

फिर अत्यंत उग्ररूपसे पृथ्वीपर अवतार लेकर वैप्रचित्तसंज्ञक दानवोंको नष्ट करूंगी ॥ ४३ ॥ उन वैप्रचित्तसंज्ञक महाअसुरोंको भक्षण करती हुईका मेरा अनारके पुष्पके समान लाल दांत होवेंगे ॥ ॥४४॥ तिसके अनंतर देवता स्वर्गमें और मनुष्य मर्त्यलोकमें निरंतर मेरी स्तुति करते हुए मुझको रक्तदंतिका कहेंगे ॥ ४५ ॥

भूयश्च शतवार्षिक्यामनावृष्ट्यामनम्भसि ॥
मुनिभिः संस्तुता भूमौ संभविष्याम्ययोनिजा ४६॥

ततः शतेन नेत्राणां निरीक्षिष्यामि यन्मुनीन् ॥
कीर्तयिष्यन्ति मनुजाःशताक्षीमिति मांततः॥४८॥
ततोऽहमखिलं लोकमात्मदेहसमुद्भवैः ॥
भरिष्यामि सुराः शाकैरावृष्टेः प्राणधारकैः ॥ ४८ ॥

फिर सौ वर्षोंतक जब वर्षा न होवेगी तब जलके अभावमें मुनियों करके स्तुत करी हुई मैं पृथ्वीके विषे मनुष्य योनीके विना आप ही उत्पन्न होउंगी ॥ ४६ ॥ फिर सौ नेत्रोंकरके जो मैं मुनियोंको देखूंगी इसलिये मनुष्य मुझको "शताक्षी" ऐसा कीर्तन करेंगे ॥ ४७ ॥ हे देवताओं ! तिसके अनंतर अपने शरीरसे उत्पन्नहुए प्रणोंकी रक्षा करनेंवाले शाकोंकरके संपूर्ण लोकोंकी पालन करूंगी ॥ ४८ ॥

शाकंभरीति विख्यातिं तदा यास्याम्यहं भुवि ॥
तत्रैव च वधिष्यामि दुर्गमाख्यं महासुरम् ॥ ४९ ॥
दुर्गा देवीति विख्यातं तन्मे नाम भविष्यति ॥
पुनश्चाहं यदा भीमं रूपं कृत्वा हिमाचले ॥ ५० ॥
रक्षांसि भक्षयिष्यामि मुनीनां त्राणकारणात् ॥
तदा मां मुनयः सर्वे स्तोष्यन्त्यानम्रमूर्तयः ॥ ५१ ॥

तब पृथ्वीपर "शाकंभरी" ऐसा नामसे विख्यात होऊंगी और वहां भी दुर्ग नामवाले महाअसुरको मारूंगी ॥ ४९ ॥ तब मेरा नाम "दुर्गा देवी" ऐसा विख्यात होगा फिर हिमाचल पर्वतमें मैं भयंकर रूप धारण करके मुनियोंकी रक्षाके कारण राक्षसोंको नष्ट करूंगी तब नम्रहुए सम्पूर्ण मुनि मेरी स्तुति करेंगे ॥ ५० ॥ ५१ ॥

भीमा देवीति विख्यातं तन्मे नाम भविष्यति ॥
यदाऽरुणाख्यस्त्रैलोक्ये महाबाधां करिष्यति ॥५२॥

तदाऽहं भ्रामरं रूपं कृत्वाऽसंख्येयषट्पदम् ॥
त्रैलोक्यस्य हितार्थाय वधिष्यामि महासुरम् ॥ ५३ ॥
भ्रामरीति च मां लोकास्तदा स्तोष्यन्ति सर्वतः ॥
इत्थं यदा यदा बाधा दानवोत्था भविष्यति ॥ ५४ ॥
तदा तदाऽवतीर्याहं करिष्याम्यरिसंक्षयम् ॥ ५५ ॥
इति मार्कण्डेयपुराणे सावर्णिके मन्वन्तरे देवीमाहात्म्ये नारायणीस्तुतिर्नामैकादशोऽध्यायः ॥ ११ ॥

तब मेरा नाम "भीमादेवी" ऐसा विख्यात होवेगा और जब अरुण नाम दैत्य त्रैलोक्यमें महा बाधा करेगा ॥५२॥ तबमैं असंख्य भौंरोंका भ्रमररूप करके त्रैलोक्यके हितके लिये महाअसुरोंको मारूंगी ॥५३॥ तब मनुष्य चारोंतरफसे "भ्रामरी" ऐसा नामसे स्तुति करेंगे इस प्रकार जब २ दानवोंसे पीडा होवेगी ॥ ५४ ॥ तब २ अवतार धारण करके शत्रुवोंका नाश करूंगी ॥ ५५ ॥

इति श्रीमार्कंडेयपुराणे सावर्णिके मन्वंतरे देवीमाहात्म्ये पंडितनंदलालकृतभाषाटीकायां नारायणीस्तुतिर्नामैकादशोऽध्यायः ॥ ११ ॥

---

अथ द्वादशोऽध्यायः।

देव्युवाच ॥ १ ॥

एभिः स्तवैश्च मां नित्यं स्तोष्यते यः समाहितः ॥
तस्याहं सकलां बाधां नाशयिष्याम्यसंशयम् ॥ २ ॥
मधुकैटभनाशं च महिषासुरघातनम् ॥
कीर्तयिष्यन्ति ये तद्वद्वधं शुम्भनिशुम्भयोः ॥ ३ ॥

देवीकहनेलगी ॥ १ ॥ सावधानहुवा जो पुरुष इन स्तोत्रोंकरके

नित्य मेरी स्तुति करता है उसकी संपूर्ण बाधाओं ( पीडाओं ) को निस्संदेह मैं शांत करदेतीहूं ॥ २ ॥ मधुकैटभका नाश, महिषाऽसुरका घात और शुंभ निशुंभका वध जो मनुष्य कीर्तन करेंगे ॥ ३ ॥

अष्टम्यां च चतुर्दश्यां नवम्यां चैकचेतसः ॥
श्रोष्यन्ति चैव ये भक्तया मम माहात्म्यमुत्तमम् ॥ ४
न तेषां दुष्कृतं किंचिद्दुष्कृतोत्था न चापदः ॥
भविष्यति न दारिद्र्यं न चैवेष्टवियोजनम् ॥ ५ ॥
शत्रुतो न भयं तस्य दस्युतो वा न राजतः ॥
न शस्त्रानलतोयौघात्कदाचित्संभविष्यति ॥ ६ ॥

और अष्टमी, चतुर्दशी तथा नवमीके दिन जो एकाग्रचित्तहुये मनुष्य इस मेरे उत्तम माहात्म्यको भक्तिसे सुनेंगे ॥ ४ ॥ उनके कोई पाप न रहेगा, पापसे उत्पन्नहुई कोई विपत्ति न होगी, दारिद्र्य न होगा और प्रियजनका वियोग न होगा ॥ ५ ॥ और उसको शत्रुसे भय नहीं होगा न चोरोंसे भय होगा न राजासे भय होगा और कदाचित् भी शस्त्र, अग्नि और जलोंके समूहसे भय न होगा ॥ ६ ॥

तस्मान्ममैतन्माहात्म्यं पठितव्यं समाहितैः ॥
श्रोतव्यं च सदा भक्तया परं स्वस्त्ययनं महत् ॥ ७ ॥
उपसर्गानशेषांस्तु महामारीसमुद्भवान् ॥
तथा त्रिविधमुत्पातं महात्म्यं शमयेन्मम ॥ ८ ॥

इसलिये परमकल्याणका स्थान यह मेरा महात्म्य सावधानपुरुषोंको पढना योग्य है और सुनना योग्य है ॥ ७ ॥ और यह मेरा माहात्म्य महामारीसे उत्पन्नहुए संपूर्ण उपद्रवोंको और तीन प्रकारके उत्पातोंको शांत करदेताहै ॥ ८ ॥

यत्रैतत्पठ्यते सम्यङ्नित्यमायतने मम ॥
सदा न तद्विमोक्ष्यामि सन्निध्यं तत्र मे स्थितम् ९
बलिप्रदाने पूजायामग्निकार्ये महोत्सवे ॥
सर्वं ममैतच्चरितमुच्चार्यं श्राव्यमेव च १० ॥
जानताऽजानता वापि बलिपूजां तथा कृताम् ॥
प्रतीक्षिष्याम्यहं प्रीत्या वह्निहोमं तथा कृतम्॥११॥

जिस स्थानमें यह मेरा स्तोत्र नित्य अच्छीतरह पढाजाता है.उसको मैं कभी नहीं त्यागती हूं सदा उसके समीप (पास) रहती हूं ॥९॥और बलिप्रदानमें, पूजामें, अग्निकार्यमें और महोत्सवमें यह संपूर्ण मेरा चरित्र उच्चारण करना योग्य है और सुनना योग्य है ॥१०॥ जानकर अथवा विनाजाने जो बलिपूजा कीजाती है तथा अग्निमें हवन किया-जाता है उसको मैं प्रसन्न होकर ग्रहण करतीहूं ॥ ११ ॥

शरत्काले महापूजा क्रियते या च वार्षिऽकी ॥
तस्यांममैतन्माहात्म्यं श्रुत्वा भक्तिसमान्वतः॥१२
सर्वबाधाविनिर्मुक्तो धनधान्यसुतान्वितः ॥
मनुष्यो मत्प्रसादेन भविष्यति न संशयः ॥ १३ ॥
श्रुत्वा ममैतन्माहात्म्य तथा चोत्पत्तयः शुभाः ॥
पराक्रमं च युद्धेषु जायते निर्भयः पुमान् ॥ १४ ॥

और शरद कालमें जो प्रत्येक वर्ष की महापूजा कीजाती हे उसमें यह मेरा माहात्म्य भक्तियुक्त हुआ मनुष्य सुनकर ॥ १२ ॥ मेरे प्रसादसे संपूर्ण बाधाओं (पीडाओं) से छूटजाता है और धन,धान्य तथा पुत्रोंसे युक्त होजाता है ॥१३॥ और इस मेरे माहात्म्यको, शुभ उत्पत्तियोंको तथा पराक्रमको सुनकर मनुष्य युद्धोंमें निर्भय होजाता है ॥ ४ ॥

रिपवः संक्षयं यान्ति कल्याणं चोपपद्यते ॥
नन्दते च कुलं पुंसां माहात्म्यं मम शृण्वताम् ॥१५
शान्तिकर्मणि सर्वत्र तथा दुःस्वप्नदर्शने ॥
ग्रहपीडासु चोग्रासु माहात्म्यं शृणुयान्मम॥ १६ ॥
उपसर्गाः शमं यान्ति ग्रहपीडाश्च दारुणाः ॥
दुःस्वप्नं च नृभिर्दृष्टं सुस्वप्नमुपजायते ॥ १७ ॥

और इस मेरा माहात्म्यके सुनतेहुए पुरुषोंके शत्रु नष्ट होजाते हैं कल्यणकी प्राप्ति होजाती है और कुल आनंदित होजाता है ॥ १५॥ और संपूर्ण ग्रहपीडाओंमें तथाभयंकरकार्योंमें जो यह मेरा माहात्म्य सुनताहै उसके संपूर्ण दुःख शांत होजातेहैं और दारुण ग्रहपीडाएँ शांत होजाती हैं और मनुष्योंका देखाहुआ बुरा स्वप्न अच्छा स्वप्न होजाता है॥ ॥ १६ ॥ १७ ॥

बालग्रहाभिभूतानां बालानां शान्तिकारकम् ॥
संघातभेदे च नृणां मैत्रीकरणमुत्तमम् ॥ १८ ॥
दुर्वृत्तानामशेषाणां बलहानिकरं परम् ॥
रक्षोभूतपिशाचानां पठनादेव नाशनम् ॥ १९ ॥
सर्वं ममैतन्माहात्म्यं मम सन्निधिकारकम् ॥
पशुपुष्पार्घधूपैस्तथोत्तमैः ॥ २० ॥ गन्धदीपै-

और बालग्रहों (पूतना, डाकिनी, शाकिनी आदिकों) करके ग्रस्त हुए बालकोंको यह मेरा माहात्म्य शांति करनेवाला है और मनुष्योंके समुदायकी फूट होनेमें यह मैत्री करनेवाला है ॥ १८॥ और यह माहात्म्यं संपूर्ण दुराचारी पुरुषोंके बलकी हानि करनेवाला है और पाठकरनेमात्रसे ही राक्षस, भूत और पिशाच इनका नाश करनेवाला है॥ १९॥ यह

मेरा संपूर्ण माहात्म्य मेरी सन्निधि [ समीपता ] करनेवाला है और उत्तम पशु, पुष्प, अर्घ, धूप, गंध और दीपक इन करके ॥ २० ॥

विप्राणां भोजनैर्होमैः प्रोक्षणीयैरहर्निशम् ॥
अन्यैश्च विविधैर्भोगैः प्रदानैर्वत्सरेण या ॥ २१ ॥
प्रीतिर्मे क्रियते साऽस्मिन्सकृदुच्चरिते श्रुते ॥
श्रुतं हरति पापानि तथारोग्यं प्रयच्छति ॥ २२ ॥
रक्षां करोति भूतेभ्यो जन्मनां कीर्तनं मम ॥
युद्धेषु चरितं यन्मे दुष्टदैत्यनिबर्हणम् ॥ २३ ॥

ब्राह्मणभोजन करके, होम करके, दिनरात्रिके अभिषेककरके अन्य अनेक प्रकारके भोगों करके और प्रत्येक वर्ष जो बलिप्रदान आदि होतेहैं उन करके ॥ २१ ॥ इन सर्व करके जैसी मेरे प्रसन्नता होती है वैसी प्रसन्नता इस सुंदर चरित्रके एकवार सुननेसे ही होजाती है यह सुनाहुवा संपूर्ण पापोंको हरलेता है और आरोग्यको देताहै ॥ २२ ॥ मेरे जन्मोंका कीर्तन तो दुष्ट प्राणियोंसे रक्षा करता है और युद्धोंमें जो दुष्ट दैत्योंका नष्ट करनेवाला मेरा चरित्र है ॥ २३ ॥

तस्मिञ्छ्रुते वैरिकृतं भयं पुंसां न जायते ॥
युष्माभिः स्तुतयो याश्च याश्च ब्रह्मर्षिभिःकृताः २४
ब्रह्मणा च कृतास्तास्तु प्रयच्छन्ति शुभां मतिम् ॥
अरण्ये प्रान्तरे वापि दावाग्निपरिवारितः ॥ २५ ॥
दस्युभिर्वा वृतः शून्ये गृहीतो वापि शत्रुभिः ॥
सिंहव्याघ्रानुयातो वा वने वा वनहस्तिभिः ॥२६॥

उसको सुननेसे पुरुषोंको शत्रुवोंका कियाहुवा भय नहीं होता है

और जो स्तुतियां तुमने की हैं और जो ब्रह्मर्षियोंने की हैं ॥ ४७ ॥ और जो स्तुतियां ब्रह्माने की हैं वे संपूर्ण मनुष्यको शुभबुद्धि देती हैं और बडे वननें दावाग्निसे घिराहुवा ॥२५॥ और शून्यमार्गमें चोरोंसे पकडाहुवा अथवा शत्रुवोंसे पकडाहुवा और वनमें सिंह, बघेरा तथा वनहस्तियोंसे दबायाहुवा ॥ २६ ॥

राज्ञा क्रुद्धेन चाज्ञप्तो वध्यो बन्धगतोऽपि वा ॥
आघूर्णितो वा वातेन स्थितः पोते महार्णवे ॥२७॥
पतत्सु चापि शस्त्रेषु संग्रामे भृशदारुणे ॥
सर्वाबाधासु घोरासु वेदनाभ्यर्दितोऽपि वा ॥ २८ ॥
स्मरन्ममैतच्चरितं नरो मुच्येत संकटात् ॥
मम प्रभावात्सिंहाद्या दस्यवो वैरिणस्तथा ॥ २९ ॥
दूरादेव पलायन्ते स्मरतश्चरितं मम ॥ ३० ॥

क्रोधसे राजाने मारनेके लिये आज्ञादियाहुवा अथवा बंधनमें पडाहुवा अथवा बडे समुद्रमें नौकामें बैठा वायुसे घुमायाहुवा ॥ २७ ॥ और अत्यंत दारुण संग्राममें शस्त्र चलतेहुए संपूर्ण घोर बाधाओंमें पीडाओंसे दुःखितहुवा ॥ २८ ॥ ऐसा मनुष्य इस मेरे चरितका स्मरण करताहुवा संकटसे छूटजाता है और मेरे प्रभावसे सिंह आदि और चोर तथा शत्रु इस मेरे चरित्रका पाठ करनेसे दूरसेही भागजाते हैं पास नहीं आतेहैं ॥ २९ ॥ ३० ॥

ऋषिरुवाच ॥ ३१ ॥

इत्युक्त्वा सा भगवती चण्डिका चण्डविक्रमा ॥३२
पश्यतामेव देवानां तत्रैवान्तरधीयत ॥
तेऽपि देवा निरातङ्काःस्वाधिकारान्यथा पुरा ॥३३॥
यज्ञभागभुजः सर्वे चक्रुर्विनिहतारयः ॥

दैत्याश्च देव्या निहते शुम्भे देवरिपौ युधि ॥३४॥
जगद्विध्वंसके तस्मिन्महोग्रेऽतुलविक्रमे ॥
निशुम्भे च महावीर्ये शेषाः पातालमाययुः ॥३५॥

ऋषि कहनेलगे ॥ ३१ ॥ प्रचंड हैं पराक्रम जिसके ऐसी वह भगवती इस प्रकार कहकर ॥३२॥ देवताओंके देखते २ ही वहां अंतर्धान होगई और यज्ञोंके भोगनेवाले नष्ट हुएहैं शत्रु जिनके ऐसे वे संपूर्ण देवता भयरहित होकर पहलेकी तरह अपने २ अधिकारोंको प्राप्त होते भये और जब देवीने युद्धमें देवताओंका शत्रु शुंभको मारडाला और जगतका विध्वंस करनेवाला, महाघोर. अतुल पराक्रमवाला और महावीर्यवाला ऐसा निशुंभको मारडाला तब बाकी रहे दैत्य पातालको चले गये ॥ ३३ ॥ ३४ ॥ ३५ ॥

एवं भगवती देवी सा नित्याऽपि पुनः पुनः ॥
संभूय कुरुते भूप जगतः परिपालनम् ॥३६॥
तयैतन्मोह्यते विश्वं सैव विश्वं प्रसूयते ॥
सा याचिता च विज्ञानं तुष्टा ऋद्धिं प्रयच्छति ३७
व्याप्तं तयैतत्सकलं ब्रह्माण्डं मनुजेश्वर ॥
महाकाल्या महाकाले महामारीस्वरूपया ॥ ३८ ॥

हे राजन् ! वह नित्य होनेवाली भी भगवती देवी इस प्रकार उत्पन्न होकर विश्व ( जगत ) का परिपालन करती है ॥ ३६ ॥ वही इस विश्वको मोहित करती है और ऋद्धि देती है ॥ ३७ ॥ हे मनुजेश्वर ! ( हे राजन् ) उस भगवती करकेयह संपूर्ण ब्रह्मांड व्याप्त होरहाहै और प्रलयकालमें महाकालीस्वरूपा महाकालीसे यह ब्रह्मांड व्याप्त होताहै ॥ ३८ ॥

सैव काले महामारी सैव सृष्टिर्भवत्यजा ॥
स्थितिं करोति भूतानां सैव काले सनातनी ॥३९॥
भवकाले नृणां सैव लक्ष्मीर्वृद्धिप्रदा गृहे ॥
सैवाभावे तथा लक्ष्मीर्विनाशायोपजायते ॥ ४० ॥
स्तुता संपूजिता पुष्पैर्धूपगंन्धादिभिस्तथा ॥
ददाति वित्तं पुत्रांश्च मतिं धर्मे गतिं शुभाम् ॥४१॥
इति मार्कण्डेयपुराणे सावर्णिके मन्वन्तरे देवीमाहात्म्ये भगवतीवाक्यं नाम द्वादशोऽध्यायः ॥१२॥

और वही अजन्म भगवती जब काल आताहै तब महामारीस्वरूप होजाती है और जन्मसमय सृष्टिरूप होजातीहै और पालनसमयमें वही सनातनी देवी प्राणियोंकी पालना करती है ॥ ३९ ॥ और वही देवी मनुष्योंके सम्पत्तिकालमें घरविषे वृद्धिके देनेवाली लक्ष्मीस्वरूप होजाती है और वही देवी विपत्तिकालमें मनुष्योंके नाशके लिये अलक्ष्मी (दारिद्र्य) रूप होजाती है ॥ ४० ॥ और स्तुत कीहुई तथा पुष्प, धूप, और गंध आदिकों करके अच्छीतरह पूजन करीहुई वह देवी धन पुत्र और धर्ममें शुभ बुद्धि देती है ॥ ४१ ॥

इति श्रीमार्कंडेयपुराणे सावर्णिके मन्वंतरे देवीमाहात्म्ये पंडितनंदलालकृतभाषाटीकायां भगवतीवाक्यं नाम द्वादशोऽध्यायः ॥ १२ ॥

अथ त्रयोदशोऽध्यायः ।

ऋषिरुवाच ॥ १ ॥

एतत्ते कथितं भूप देवीमाहात्म्यमुत्तमम् ॥
एवंप्रभावा सा देवी ययेदं धार्यते जगत् ॥ २ ॥

विद्या तथैव क्रियते भगवद्विष्णुमायया ॥
तया त्वमेष वैश्यश्च तथैवान्ये विवेकिनः ॥ ३ ॥

ऋषि कहने लगे ॥ १ ॥ हे राजन्! यह तुझसे देवीका उत्तम माहात्म्य मैंने कहा वह देवी ऐसा प्रभाववाली है कि यह जगत् उस करके धारण किया जाता है ॥ २ ॥ और उसी भगवान् विष्णुकी माया करके मनुष्योंको तत्वज्ञान होता है और उसी करके तुम और यह वैश्य तथा अन्य [ दूसरे ] ज्ञानी जन ॥ ३ ॥

मोह्यन्ते मोहिताश्चैव मोहमेष्यन्ति चापरे ॥
तामुपैहि महाराज शरणं परमेश्वरीम् ॥ ४ ॥
आराधिता सैव नृणां भोगस्वर्गापवर्गदा ॥५॥

मोहित किये जाते हैं, मोहित किये गयेहैं और अपर [ दूसरे ] मोहित किये जायेंगे अर्थात वर्तमान, भूत और भविष्यत् कालमें उसीसे मोह होता है, हे महाराज ! इस लिये उसी परमेश्वरीके शरणमें प्राप्त हो ॥ ४ ॥ वही भगवती आराधन करनेसे भोग, स्वर्ग और मोक्षकी देनेवाली है ॥ ५ ॥

मार्कण्डेय उवाच ॥ ६ ॥

इति तस्य वचः श्रुत्वा सुरथः स नराधिपः ॥ ७ ॥
प्रणिपत्य महाभागं तमृषिं शंसितव्रतम् ॥
निर्विण्णोऽतिममत्वेन राज्यापहरणेन च ॥ ८ ॥

मार्कंडेय ऋषि कहने लगे ॥ ६ ॥ कि वह सुरथ राजा उन ऋषिका ऐसा वचन सुनकर और उग्र ॥ ७ ॥ व्रतवाले उस महाभाग ऋषिको नमस्कार करके अत्यंत ममतासे और राज्यके हरनेसे ग्लानिको प्राप्तहुवा ॥ ८ ॥

जगाम सद्यस्तपसे स च वैश्यो महामुने ॥
संदर्शनार्थमम्बाया नदीपुलिनसंस्थितः ॥ ९ ॥
स च वैश्यस्तपस्तेपे देवीसूक्तं परं जपन् ॥
तौ तस्मिन् पुलिने देव्याःकृत्वा मूर्तिं महीमयीम्॥१०
अर्हणां चक्रतुस्तस्याः पुष्पधूपाग्नितर्पणैः ॥
निराहारौ यताहारौ तन्मनस्कौ समाहितौ ॥११॥

शीघ्र ही तपके लिये बनमें चलागया और हे महामुने ! वह वैश्य जगदंबाके दर्शनके लिये नदीके तटके ऊपर स्थित होगया ॥ ९ ॥ और वह वैश्य वहां केवल देवीसूक्तका जप करता हुवा तप करनेलगा फिर वे दोनों उस तटपर देवीकी मृत्तिकाकी मूर्ति बनाकर ॥ १० ॥ पुष्प, धूप, हवन और तर्पण इन करके उस मूर्तिकी पुजा करने लगे और प्रथम परिमित आहार तदनंतर निहार हुए भगवती देवीमें ही चित्त लगाकर सावधान हुए ॥ ११ ॥

ददतुस्तौ बलिं चैव निजगात्रासृगुक्षितम् ॥
एवं समाराधयतोस्त्रिभिर्वर्षैर्यतात्मनोः ॥ १२ ॥
परितुष्टा जगद्धात्री प्रत्यक्षं प्राह चण्डिका ॥ १३ ॥

वे दोनों अपने २ शरीरोंके रुधिरसे चर्चित कर अर्थात् रुधिरके छीटे देकर बलिप्रदान करते भये इस प्रकार मनको विषयोंसे रोककर तीन वर्षतक उन दोनोंके आराधान करते हुए ॥१२॥ प्रसन्न हुई जगतकी पालन करनेवाली चंडिका प्रत्यक्ष दर्शन देकर बोली ॥१३॥

देव्युवाच ॥ १४ ॥

यत्प्रार्थ्यते त्वया भूप त्वया च कुलनन्दन ॥ १५ ॥
मत्तस्तत्प्राप्यतां सर्वं परितुष्टा ददामि तत् ॥ १६ ॥

देवी कहनेलगी ॥ १४ ॥ हे राजन् ! तुझे जिस वरकी प्रार्थना करी है और हे वैश्य ! तुझे जिस वरकी प्रार्थना करनी है ॥१५॥ वह संपूर्ण मुझसे तुम प्राप्त करो मैं प्रसन्नहुई तुह्मारेको वही वर दूंगी ॥ १६ ॥

मार्कंडेउवाच ॥ १७ ॥

ततो वव्रे नृपो राज्यमविभ्रंश्यन्यजन्मनि ॥१८॥
अत्रैव च निजं राज्यं हतशत्रुबलं बलात् ॥
सोऽपि वैश्यततो ज्ञानं वव्रे निर्विण्णमानसः ॥१९॥
ममेत्यहमिति प्राज्ञः सङ्गविच्युतिकारकम् ॥ २० ॥

मार्कंडेय ऋषि कहनेलगे ॥ १७ ॥ तिसके अंतर वह राजा अगले जन्ममें अखंड राज्य और इस जन्ममें अपने बलसे शत्रुवोंकी सेना को मारकर अपना राज्य वरदान मागता भया और उपरामको प्राप्त मन-वाला वह बुद्धिमान् वैश्य भी "यह मेरा है" और "यह मैं हूँ" ऐसे संगका नाश करनेवाला ज्ञान वरदान मांगताभया ॥१८॥१९॥२०॥

देव्युवाच ॥ २१ ॥

स्वल्पैरहोभिर्नृपते स्वं राज्यं प्राप्स्यते भवान्॥२२॥
हत्वा रिपूनस्खलितं तव तत्र भविष्यति ॥
मृतश्च भूयः संप्राप्य जन्म देवाद्विवस्वतः ॥ २३ ॥

देवी कहनेलगी ॥२१॥ हे राजन् अब थोडे ही दिनोंमें तुम अपने राज्यको प्राप्त होओगे ॥ २२ ॥ और वहां शत्रुवोंको मारकर तुह्मारा अखंड राज्य होवेगा और मरकर फिर सूर्यदेवसे जन्मको प्राप्त होकर ॥ २३ ॥

सावर्णिको नाम मनुर्भवान्भुवि भविष्यति ॥
वैश्यवर्य त्वया यश्च वरोऽस्मत्तोऽभिवाञ्छितः॥२४

तं प्रवच्छामि संसिद्ध्यै तव ज्ञानं भविष्यति ॥ २५ ॥

मार्कंडेय उवाच ॥ २६ ॥

इति दत्त्वा तयोर्देवी यथाऽभिलषितं वरम् ॥ २७॥
बभूवान्तर्हिता सद्यो भक्त्या ताभ्यामभिष्टुता ॥
एवं देव्या वरं लब्ध्वा सुरथः क्षत्रियर्षभः ॥२८॥
सूर्याज्जन्म समासाद्य सावर्णिर्भविता मनुः ॥ २९ ॥

तुम सावर्णिक नाम से प्रसिद्ध मनु पृथ्वीपर होओगे. और हे वैश्योंमें श्रेष्ठ ! जो तुमने मुझस बांछित वर मांगाहै ॥ २४ ॥ उसको मैं देतीहूं कि सम्यक् प्रकार की सिद्धिके लिये तुझको ज्ञान होवेगा ॥ २५ ॥ मार्कंडेय ऋषि कहनेलगे ॥ २६ ॥ कि देवी इस प्रकार उन दोनोंको जो अभिलषित तथा वही वर देकर ॥ २७ ॥ उन दोनोंसे भक्ति-पूर्वक स्तुत की हुई शीघ्र ही अंतर्धान होगई और क्षत्रियोंमें श्रेष्ठ वह सुरथ राजा इस प्रकार देवीसे वरको लब्ध करके ॥२८॥ और सूर्यसे जन्मको प्राप्त होकर सावर्णि नामसे प्रसिद्ध मनु होवेगा ॥ २९ ॥

इति मार्कण्डे०सावर्णिके०देवी०सुरथवैश्ययो-
र्वरप्रदानं नाम त्रयोदशोऽध्यायः ॥ १३ ॥

इति श्रीमार्कंडेयपुराणे सावर्णिके मन्वन्तरे देवीमात्म्ये पंडितनंद-लालकृतभाषाटीकायां त्रयोदशोऽध्यायः ॥ १३ ॥

कवित्त–ऐसो कौन द्विज सप्तशतीको पठन नाहिं करते पैभूतलमैं बिलै अर्थदेता है।अर्थविना भाव भावविना भक्ति भक्ति विनाइच्छा फलदेता देव कहो जग केता हैं॥याहीसों श्रीकृष्णलाल द्विजमैत्री मन गत भाषाटीका विशदार थाके छुठि नेता हैं । विक्रमके संवत उन्नीस सौ उनसठामैं, बुध नंदलाल याके प्रेमसो रचेता हैं ॥ १ ॥